सम्पूर्णानन्दग्रन्थमाला

( ८ )

# अनुसन्धानपद्धतिः

डॉ० भागीरथप्रसादत्रिपाठिविरचिता






वाराणसेय-संस्कृत-विश्वविद्यालयः



# SAMPŪRṆĀNANDA GRANTHAMĀLĀ

*Vol. 8*

**General Editor**
**Badarīnātha Śukla**
**Director, Research Institute,**
**Varanaseya Sanskrit Vishvavidyalaya,**
**Varanasi.**




# ANUSAṀDHĀNA PADDHATIḤ

*by*

**Dr. Bhāgīratha Prasāda Tripāṭhī**
**'Vāgīśa Śāstrī'**

VARANASI
**1969**

सम्पूर्णानन्द-ग्रन्थमाला
( ८ )



प्रधानसम्पादकः
श्रीबदरीनाथशुक्लः

# अनुसन्धानपद्धतिः

लेखकः सम्पादकश्च—
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
भू० पू० सीनियर-रिसर्च-फेलो
वाराणसेयसंस्कृतविश्वविद्यालयस्थः

वाराणस्याम्
१८९१ तमे शकाब्दे



# किञ्चित् प्रास्ताविकम्

संस्कृतवाङ्मयेऽनुसन्धानदिङ्निर्देशकग्रन्थानां दुरासादतयाऽनुसन्धातृभिरनुभूयमानस्य बाधाराशेर्निराचिकीर्षयाऽनुसन्धानपाटवोपस्कृतेन डॉ० वागीशशास्त्रिणा प्रस्तुतः प्रयासो विहितः। अनेन महानुभावेन 'पाणिनीयधातुपाठसमीक्षा' 'तद्धितान्ताः केचन शब्दाः' 'लोकविज्ञानम्' इत्यादयो बहवो ग्रन्था अनुसन्धानप्रधानाः प्रणीताः। तेषां रचनाप्रसङ्गे विविधानि पुस्तकानि तेन पर्यालोडितानि, यूरोपीया भारतीयाश्च बह्वयो भाषाः समधीताश्चेत्येतदीयम् अनुसन्धानविषयकं ज्ञानं विस्तीर्णम्। इह प्रस्तूयमाने 'अनुसन्धानपद्धतिः' इत्यभिधेयग्रन्थे तेन प्रायः सर्वेऽनुसन्धानपक्षाः सूत्ररूपेणोपन्यस्ताः।

सन्त्यनुसन्धानसम्बन्धे विविधानि मतानि। केचित् तथ्यपरिष्करणमात्रम्, अपरे संपादनमात्रम्, इतरे च सामग्रीसंग्रहमात्रमेवानुसन्धानमिति वदन्ति। यद्यपि सूत्रसंग्रथनदृशा सामग्रीसंग्रहणमात्रमपि श्रेयस्करं व्यासजैमिनिगोतमपाणिनिसूत्रसंकाशम्, तथाप्यद्यत्वे वैशद्यप्रिये युगे संगृहीतसामग्रीसाहाय्येन यथाक्रमं निबध्यमानो विषयो विपश्चितां मोदाय कल्पते। ईदृशं विधिमवलम्ब्य संदृभ्यमानेष्वपि ग्रन्थेषु स्वोपज्ञता यदि खपुष्पायते, तदा न भवन्ति ते प्रशंसनीया मनीषिजनैः। अत आवश्यकमिदं यत् संगृहीतसामग्रीं विविधैर्दृक्कोणैर्यथाविधि समधीत्य तदवगाहनपूर्वकमनुसन्धाता स्वोपज्ञतां प्रस्तुवीत। तदुद्भावनविधिर्लेखकेन सोदाहरणं प्रकृतपुस्तके सम्यग् विवेचितो विविधग्रन्थाध्ययनसंजातसारभूतः। जिज्ञासुभिस्तस्यावश्यपठनीयस्य सहायतया स्वोपज्ञतापूर्वकं विरचय्य ग्रन्थान् वर्धनीयो गीर्वाणवाणीशेवधिः।

संस्कृतजगत्येतादृशं पुस्तकं चिरात् प्रतीक्ष्यमाणमासीदिति वाराणसेयसंस्कृतविश्वविद्यालयेनास्य प्रकाशनमुररीकृतम्। ग्रन्थरत्नमिदमुपहरता प्रणेत्रा ध्रुवमुपकृता अनुसन्धानच्छात्राः प्रीणिताश्च पण्डितजनाः। आशासे वपुषा लघुरपि गुणैर्गुरुरेष ग्रन्थोऽनुसन्धित्सून् सातिशयमुपकुर्यादिति।

पुरुषोत्तममासे शुक्लपक्षे
२०२६ वैक्रमाब्दे



बदरीनाथशुक्लः
अनुसन्धानसंस्थानसंचालकः
वाराणसेयसंस्कृतविश्वविद्यालये।

# अनुसन्धानपद्धतिः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री', अनुसंधानसंस्थानसदस्यो
वाराणसेयसंस्कृतविश्वविद्यालये ।

यद्यप्यनुसन्धानम्, अन्वेषणम्, शोधः, गवेषणादयः शब्दा रिसर्च (Research) इत्याङ्गलशब्दस्यानुवादपरिणामाः ; भारते वर्षे तु भाष्यम् (चूर्णिः), व्याख्या, समालोचना, टीकाटिप्पण्यादयः प्रचलितचराः; ऋष्यृणत्वाद् अध्ययनम् अध्यापनं च; चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति—आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति[1]; नैषधमहाकाव्येऽपि चातुर्विध्यं विद्यायाः[2], तथापि पाश्चात्यरिसर्चकलाऽभावे तादृशी नैव, किन्तु ततोऽपि श्लाघ्यतमा पद्धतिर्भारते चिरात् समधिगम्यते । मन्त्रदृष्टृत्वं मुनित्वं च नाम मूर्द्धाभिषिक्तमुदाहरणम् । वेदादयो मन्त्रदृष्टृत्वस्योदाहरणम्, सूत्रादयश्च मुनित्वस्य निदर्शनम् । व्याकरणन्यायमीमांसावेदान्तादिसूत्रग्रन्थेषु प्रकृष्टतमं तथाकथितमनुसंधानम् । पाश्चात्यपद्धत्यनुरूपं यदनुसंधानं नाम तत् कला-(Technique)-रूपम् । तत्र निबन्धलेखनपद्धतिर्भजते कानिचन वैशिष्ट्यानि ।

संस्कृतसाहित्येऽनुसंधानशब्दस्यार्थाः—विचारः, संयोगः[3], गवेषणा[4], अनुसरणमित्यादयः । संहितासु महाभाष्ये चानुसंधानशब्दो नैव प्रयुक्तः । मनुस्मृतावनुसंधानं नाम विचारः[5] ।

---

१. पस्पशाह्निकं महाभाष्यम् (गु.प्र.सं.,४२पृ.) ।
२. अधीतिबोधाचरणप्रचारणैः—नैषध. १,४ ।
३. परं ब्रह्मानुसंदध्यात्—नृसिंहोत्तरतापिन्युप० १,६ (पङ्क्तिः); २,३० (नि.सा.सं.) ।
अनुसंदधाति—ताण्ड्यब्रा० २.९.४ ।
अनुसंहितम्—ऐब्रा० ३.२.६; शाङ्खायनारण्य० ८.११ ।
अकारेणेममात्मानमन्विष्य मकारेण ब्रह्मणानुसंदध्यात्—नृसिंहोत्तर० ७.१८(=योजयेत्) ।
यथाकर्तव्यमनुसंधीयताम्—हितो० ३ ।
अलमनेनोपालम्भेन प्रस्तुतमनुसंधीयताम्—हितो० ३ ।
कस्ते निर्बन्धः पदे पदे मामनुसंधातुम्—मृच्छक० १ ।
एतौ तौ मामनुसंधत्तः —मृच्छ० २ (=अनुसरतः) ।
प्रसवयोरयं स्थानमनुसंधीयताम्—हितो० ३; (मनु० १२,१०६) ।
४. दुर्गशोधनम् अनुसंधातव्यम्—हितो० ३ (शोधनानुसंधानयोरेकत्र प्रयोगो दर्शनीयः) ।
५. यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः—मनु० १२,१०६ = विचारयति (मन्वर्थ०) ।

एष विचारः प्रणिधानकल्पो यथोपनिषत्सु[१]। नृसिंहोत्तरतापिन्युपनिषद्यस्यार्थो योजनेति[२]। सा च परमात्मपरा प्रणिधानार्थिकैवेति विज्ञेयम्। प्राकृतादिभाषास्वपि विचारार्थकोऽयम्–अणुसंधाण-(अणुसंधण) शब्दः[३]। साम्प्रतिको रिसर्चशब्दस्तु तत्त्वार्थविचारपरो रूढः। मल्लिनाथादिसमयेऽनु-संपूर्वको धाधातुर्गवेषणापरः, अभिसंबन्धपरो वा[४]। बालमनोरमाकारोऽपि 'संज्ञायां समजनिषद-निपतमनविदषुञ्शीङ्भृञिणः' (३.३.९९) इति सूत्रटीकायां सिद्धान्तकौमुद्या लिखति—'इत्या =शिबिकेति। कोशो मृग्यः' इति। भट्टोजिदीक्षितेन 'इत्या'-शब्दस्यार्थः कृतः—शिबिकेति। कस्मिंश्चिदपि कोशेऽयं शिबिकार्थो नोपलभ्यते। बालमनोरमाकारेणापि तदा बहुगवेषितोऽपि क्वचित् कोशे नोपलब्ध इति लिखितम्—कोशः=कोऽपि कोशः, मृग्यः=गवेषणीयः, यस्मिन् स्यादयं शब्द इति। उभयत्रानुसंधानगवेषणशब्दौ न रिसर्चवेद्यार्थप्रकाशकौ। काव्यप्रकाशोक्तोऽपि (काव्यानुसंधानबलात्) तथा। साहित्यदर्पणोक्तस्तु (धर्मफलाननुसंधानात्) सूक्ष्मनिरूपणपरः सूक्ष्मपरीक्षणपरो वा। ऋग्वेदभाष्ये (४.५८.२) सायणः—'तदत्रानुसंधेयम्' इत्याह। तस्यार्थः —'योज्यम्' 'ज्ञेयम्' इति। वस्तुतस्तु शब्दोऽयं मूलतो ध्यानार्थपरोऽनुध्यानपरो वा[५]।

निरुक्ते—'समाम्नायः समाम्नातः, स व्याख्यातव्यः' (१,१) इत्यत्र समापूर्वको म्नाधातु-र्मर्यादापूर्वकाभ्यासे मननीयः। अपरा क्रिया ग्रन्थीकरणार्थिका। छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाताः—निरु. १,४ इत्यत्रापि ग्रन्थीकरणरूपोऽर्थः। आम्नायशब्दस्त्वभ्यासार्थकः[६]।

---

१. परं ब्रह्मानुसंदध्यात्—नृसिंहोत्तरतापिन्यु० १,६ (पङ्क्तिः); २,३०; नादबिन्दू० ४,१; नारद-परिव्रा० ८,६।

समाधौ क्रियमाणे तु विघ्नान्यायान्ति वै बलात्।
अनुसंधानराहित्यमालस्यं भोगलालसम्॥

—तेजोबिन्दू० १,४०।

२. अकारेणेममात्मानमन्विष्य मकारेण ब्रह्मणानुसंदध्यात्—नृसिंहोत्तरतापि. ७,१८ (पङ्क्तिः)।

३. अत्ताणुसंधानपरा सुसावगा एरिसा हुंति—श्राद्धप्रतिक्रमणसूत्रवृत्तिः २०।

४. अत्र…इतिवृत्तानुकथाऽनुसंधेया—कुमारसंभवटीका १,२१।

५. सर्वचिन्तां समुत्सृज्य सर्वचेष्टाविवर्जितः।
नादमेवानुसंदध्यान्नादे चित्तं विलीयते॥

—नादबिन्दूप० ४१=ध्यायेत्।

सर्वतो निर्वेदमासाद्य स्वरूपानुसंधानमनुसंधाय—नारदपरिव्राजको. १,४।

६. शब्दधर्मार्थकामादिशास्त्रेष्वाम्नायपूर्विका।
प्रतिपत्तिरसामान्या व्युत्पत्तिरभिधीयते॥

—वाग्भटालङ्कारः १,५।

काव्यप्रकाशकारेणापि 'इति हेतुस्तदुद्भवे[१]' इत्यत्राभ्यासो दर्शितः। सोऽपि काव्यज्ञातृशिक्षया संपादितः। ग्रन्थनिर्माणे हेतुः—१. शक्तिः = प्रतिभा, २. निपुणता = व्युत्पत्तिः[१], अभ्यासश्चेति। एते त्रयः संमिलिता एव काव्यस्योद्भवे निर्माणे समुल्लासे च हेतुर्न तु हेतवः। साम्प्रतिकी गवेषणा (Research) अपि दीर्घप्रयत्नात्मकं परीक्षणम् अभ्यासात्मकमेव[२]।

पाश्चात्यदेशेषु प्रदास्यमानः 'डाक्टर' इत्युपाधिः पूर्वं चर्चोपदेशकानां 'फादर' इत्यभिधेयानामध्यापकानां कृते दीयते स्म[३]। थीसिस (Thesis) [= निबन्ध—] शब्दस्य मूले ग्रीकभाषायाः 'थे' (θε) इति धातुर्विद्यते। संस्कृतभाषायां च√धा धातुर्निश्चेयः। ग्रीकभाषायां 'थे' इति धातुर्धारणार्थकः, संस्कृतभाषायामपि तथा[४]। उपाधिधारकाणामध्यात्मविषयपण्डितत्वाद् उपाधिश्चायमध्यात्मविषयको[५] भवति स्मेति संस्कृतभाषायामप्यात्मविषयकचिन्तनस्यार्थे 'अनुसंधान' इति शब्दप्रयोग उपनिषत्सु तत्त्वानुसंधानपरः[६]। स च समाम्नायाधारक एव।

---

१. शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे॥
—काव्यप्रकाशः १,३।

२. Research = diligent inquiry.

३. Doctor—1. teacher, instructor, one who inculcates learning, opinions or principles (const.of) now rare. 2. one skilled in, and therefore competent to teach, any branch of knowledge; on eminently learned man (arch.), 3. spec. applied to the Doctors of the church, certain early 'fathers' distinguished by their eminent learning.
—Shorter Oxford English Dictionary.

४. Thesis, a statment laid down to be argued about, an essay on a theme. (L,-GK.) Latin thesis—Gκ.Thesis, a proposition statement, thing laid down. Put for θε-tis*, allied to θε-tos, placed verbal adj-from the base θε = √धा, to put, place.
Theme : a subject for discussion (F.,-L.-Gκ.) M.E. teme, OF teme F. theme; Lat theme.-Gκ. θεμa that which is laid down, the subject of on argument—Gκ.base θε-, to place; Ti θεμi, I place.√धा = To place, put; whence संस्कृत-√धा = to put.
—An Etymological Dictionary of English Language.

५. क्रिश्चियनमन्दिराणां 'फादर' इति प्रसिद्धा जनाः 'डाक्टर' पदभाजो भवन्ति स्म (द्र.टि. तृतीया)।

६. परं ब्रह्मानुसंदध्याद् विश्वादीनां क्रमः क्रमात्—नारदपरिव्राजको. ८,६ (श्लो०)।

संधानं नाम—स्थापना[१], परस्परानुकूलता[२], सम्यग् धारणम्[३], आभिमुख्येन स्थापनम्[४], संप्रयोगः[५], संश्लेषः[६], संनिधानम्[७], सम्यग् हवनम्[८], संयोजना[९], साहित्यम्[१०], संधिः[११], संघट्टनम्[१२], धनुषि बाणयोजनम्[१३], अभिषवः[१४], (मद्यसज्जाकरणम्) काञ्जिकम्[१५], मदिरा, अवदंश[१६] इत्यादि। अनु = पश्चात्, आभिमुख्येन स्थापना वा संयोजना वेत्यनुसंधानम्, कस्यचन स्थूलवस्तुनः सकाशाद् मदिरासवादिसूक्ष्मतत्त्वनिस्सारणवत् प्राप्यसामग्रीतः सूक्ष्मविचारनिस्सारणम्। तदनुसृत्य निबन्धादिलेखनम्[१७]। एवं खल्वर्थसंवादे सत्यपि लेखनकलाविसंवादः सुप्ररूढ एव। अनुसंधानशब्दार्थविधया सामग्रीसंग्रहस्य त्रैविध्यं ज्ञायते—१. अज्ञाततथ्यज्ञापनमाहोस्विद् गुप्ताया लुप्ताया वा सामग्र्याः प्रकाशः; २. उपलब्धायाः सामग्र्याः परीक्षणम्; ३. प्राप्तसामग्र्याश्च परिष्कारः। यथा कोऽपि व्योकारः स्वर्णकारो वा समधिगतान् लोहस्वर्णादिधातून् परिष्कृत्य स्वच्छीकुर्यात्। अनुसंधानग्रन्थेऽपि त्रयाणामुप-

१. सं वस्रा दधातन—ऋ. १०.१०१.५ = स्थापयत [सायणः]।
   सं दधुरर्चन्ननु स्वराज्यम्—ऋ. १.८०.१५ = स्थापयाञ्चक्रुः [सायणः]।
२. सं मातरिश्वा सं धाता समु देष्ट्री दधातु नौ—ऋ. १०.८५.४७ = आवयोर्बुद्धीः परस्परानुकूलाः करोत्वित्यर्थः [सा.]।
३. ऋतायिनी मायिनी सं दधाते—ऋ. १०.५.३ = सम्यग् धारयतः [सायणः]।
   सं छायया दधिरे—ऋ. ५.४४.६ = सम्यग् धारयन्ति [सायणः]।
   सं वज्रं पर्वशो दधुः—ऋ. ८.७.२२ = सम्यग् धारयन्ति [सायणः]।
४. संदधुर्मरुत्वन्तं सख्याय हवामहे—ऋ. १.१०१.६ = आभिमुख्येन स्थापयन्ति [सायणः]।
५. त्वे पूर्वाः संदधुः पृष्टबन्धो—ऋ. ३.२०.३ = संप्रयुयुजिरे [सायणः]।
६. ब्रह्मा च गिरो दधिरे समस्मिन्—ऋ. ६.३८.३ = संधीयन्ते संश्लिष्यन्ते [सायणः]।
७. सं सौभगानि दधिरे पावके—ऋ. ६.५.२ = सम्यग् निहितवन्तः [सायणः]।
   नाभा यज्ञस्य सं दधुर्यथा विदे—ऋ. ८.१३.२९ = संनिदधते [सायणः]।
८. त्वे इषः सं दधुः—ऋ. १०.१४०.३ = संदधति। सम्यग् जुह्वति [सायणः]।
९. सं बलं दधुः—ऋ. ७.८२.२' = समयोजयन् [सायणः]।
   संधाता संधिं मघवा—ऋ. ८.१.१२ = संधिम् = संधातव्यं तं संधाता = संयोजयिता भवति [सायणः]।
१०. यन्मामेकं समधत्ताहिहत्ये—ऋ. १.१६५.६ = संहितमभूत [सायणः]।
११. एवं कृते तु संधाने वृत्रः प्रमुदितोऽभवत—महाभार० ५.१०.३३।
१२. सरोजसंधानमिवाकरोदपाम्—कुमारसं० ५,२७।
१३. तदाशु कृतसंधानं प्रतिसंहर सायकम्—अभिज्ञानशाकु० १।
१४. संधानं स्यादभिषवः—अमरको० २,१०,४२।
१५. हलायुधः।
१६. राजनिर्घण्टः।
१७. द्र० निबन्धग्रन्थाः—१. कृत्यकल्पतरुः (११०० ई०), २. त्रिस्थलीसेतुः, ३. वीरमित्रोदयश्चेत्यादयः।

बन्धानां पूर्तिर्भवेत्—१. इहानुपलब्धतथ्यानामन्वेषणम्; २. उपलब्धतथ्यानां सिद्धान्तानां वा नवीनरूपेण समाख्यानम्; ३. ज्ञानक्षेत्रस्य सीमाविस्तारो स्वोपज्ञता वा; प्रत्यवस्थमनुसंधान-ग्रन्थोऽभ्यर्थिन आलोचनात्मकपरीक्षणसामर्थ्यस्य सम्यग् निर्णयसामर्थ्यस्य च द्योतको भवेत्। अनुसंधानस्य कियानंशः स्वप्रयत्नपरिणामः, स च कियतांशेन विषयविशेषमग्रेसारयतीति स्पष्टयितव्यमनुसंधात्राभ्यर्थिना; ४.(चतुर्थमपि तथ्यमपेक्षितम्। तदस्ति—सम्यक् प्रतिपादनशैली) निरूपणशैल्यादिदृशापि ग्रन्थस्यास्य स्वरूपं संतोषदं भवेदिति प्रकाशनार्हतां न त्यजेत्।

इमे चत्वारो गुणा निर्विवादम् अनुसंधानकार्यार्थमावश्यकाः। तेष्वन्यतमस्य का कियती वा महत्तेति प्रश्नः। स्वोपज्ञतायाः सुष्ठु प्रतिपादनशैल्याश्चानिवार्यता न कस्याप्यविदिता। प्रत्यनुसंधानकार्यं ज्ञानक्षेत्रस्य सीमाविस्तारेण भवितव्यमेवानिवार्यतया, तदेव तत्सार्थक्यम्। अधिजीवनं कस्यापि गभीरकार्यस्य मूल्यनिर्धारणे स्वोपज्ञता समुत्कृष्टो निकषः ( अस्या विषये वैशद्येन 'स्वोपज्ञता कल्पना च' इत्यध्याये द्रष्टव्यम् )। साहित्यकृतिरनुसंधानं वा नास्ति जीवनतो वहिः। स्वोपज्ञतायाः शैलीसौष्ठवस्य च स्वरूपं विषयसापेक्षं भवति, न सर्वत्र सादृश्यं भजत इति त्वन्यत्।

सम्प्रति तावत् प्रथमद्वितीययोस्तथ्ययोर्विषये वक्तव्यम्। नवीनतथ्यान्वेषणस्य समधि-गततथ्य-( सिद्धान्त )-पुनराख्यानस्य च किं मिथो महत्त्वम्? संक्षेपत उभयोर्महिमा विषय-विशेषमवलम्बते। स्थूलतस्त्विदमैदम्पर्यम्—वैज्ञानिकविषयानुसंधाने तथ्यशीर्षण्यता, साहित्यिक-विषयानुसंधाने च विचारमूर्धन्यता। इतिहासस्तत्संबद्धनृतत्त्व-पुरातत्त्वशास्त्रादीनि तथ्यविचारयो रुभयोर्महत्त्वाधायकानि, समाजशास्त्रतत्संबद्धार्थशास्त्रवाणिज्यशास्त्रराजनीतिशास्त्रप्रभृतीनि विज्ञानसाहित्ययोर्मध्यस्थितिकानि। विषयविभाजनादिवर्गीकरणे सापेक्षप्राधान्यस्यैव प्रामाण्यमिति न पार्यते कर्तुं तदीयस्वरूपनिर्धारणम्।

## प्रक्रिया

सुव्यवस्थितरूपेण विषय-प्रस्तवनस्य प्रविधिर्नाम भवति सरणिरनुसंधानस्य। आङ्गल-भाषायामयं प्रकारः Technique टेकनीकशब्देनाभिधीयते। पाश्चात्यदेशीयभाषानुसंधान-प्रविधिम् ( Technique ) अधिकृत्य बहवो ग्रन्थाः प्रकाशिताः, अधुनापि प्रकाश्यन्ते। तत्र प्रतिग्रन्थं प्रस्तूयमानो नूतनो दृष्टिकोणः। तेषु सर्वेषूत्तमो ग्रन्थः कोलआर्थ-लिखितो वर्तते—'ए मैन्यूअल ऑव थीसिस राइटिङ्ग' ( A Manual of thesis writing ) पूर्वलिखित-

पुस्तकेषु सन्ति बहवो दोषा इत्यस्य ग्रन्थस्य पठनेन ज्ञायते। संक्षेपतो विज्ञानस्यान्येषां क्षेत्राणामिव वैज्ञानिकप्रविधेः ( टेकनीकस्य ) नास्तीयत्ता।

साहित्यिकस्यानुसंधानकार्यस्य भाषिकस्य वानुसंधानकार्यस्य जनिरेव समजनि विज्ञानक्षेत्रे, ऐतिह्यक्षेत्रे च। फलतोऽनुसंधानकार्यस्य स्तोऽभिन्ने अङ्गे विज्ञानम्, इतिहासश्च। ऐतिहासिकी दृष्टिर्वैज्ञानिकः प्रविधिः ( टेकनीक ) चेति द्वौ पक्षौ स्तोऽनुसंधानविहङ्गमस्य। नैकेनापि पक्षेण विना भवति गतिः पक्षिणः।

## वैज्ञानिकः प्रविधिः ( Technique )

१. अनुपलब्धानां नवीनतथ्यानां वा गवेषणा नूतनप्रकारेण च तत्प्रतिपादनम्।
२. उपलब्धानां तथ्यानां सिद्धान्तानां वा पुनराख्यानम्, नवीनप्रकारेण च तत्प्रतिपादनम्।
३. कस्याश्चिदपि रचनायाः सुदृढमूलप्रमाणपुरस्सरम् आलोचनात्मकं परीक्षणम्; नवीनपद्धत्या च तत्प्रतिपादनम्।
४. कस्याश्चिदपि रचनायाः सुदृढमूलनिर्णयपुरस्सरं प्रमाणप्रपुष्टं पाठानुसंधानं विस्तृतभूमिकया च नवीनपद्धत्यात्मकप्रतिपादनपूर्वकं तत्संपादनम्।
५. कस्याश्चिदपि रचनायाः कयाचिदन्यरचनया रचयित्रा वा सह तुलना।
६. ज्ञानक्षेत्रस्य सीमाविस्तारो नाम स्वोपज्ञता।
७. प्रतिपादनशैली।

अव्यवस्थिता विकीर्णा च सामग्री परिष्कृतरूपेण ग्राह्यरूपतया च तथा विन्यस्येत, येन समुल्लिखितानां सप्तानां प्रकाराणां पूर्णत उताहोंऽशतः सज्जीकरणपूर्वकम् उपस्थापनं भवेत्। अयमेव वैज्ञानिकः प्रविधिः ( Technique )।

समष्टितः स्वरूपम् अनुसंधानपद्धतेः खल्वेवं भवेत्—अनुसंधानसामग्र्या उपलब्ध्यनन्तरं सम्यगनुशीलनपूर्वकं तस्याः सुव्यवस्थितरूपेणोपस्थापनपुरस्सरं प्रतिपादनम्।

सुव्यवस्थितोपस्थापनं नाम—प्रबन्धारम्भे—१. उपोद्घातः, २. विषयानुक्रमणिका, ३. संकेतसूची च; प्रबन्धान्ते—१. परिशिष्टम्, २. सहायकग्रन्थसूची, ३. नामानुक्रमणिका चेत्येवञ्जातीयकाः प्रकारा आवश्यकरूपेण भवन्त्युपस्थापनीयाः। अस्य प्रबन्धारम्भिकस्योपस्थापनस्य 'पूर्वबन्धः' इति, प्रबन्धान्तोपस्थापनस्य च 'पश्चबन्धः' इति नामान्तरम्।

## दोषहानोपायाः

१. विषयस्य वर्गीकरणं न भवेद् असंबद्धं पुनरावृत्तियुतं वा।

२. तथ्यनिरूपणस्य स्थाने विवरणात्मकं विवेचनं नाधिकमहत्त्वपूर्वकं विन्यस्येत।

३. करणीयानां स्वस्थापनानां स्थाने भाषापरिवर्तनपूर्वकम् अन्येषां लेखकानां मान्यता नाङ्गीक्रियेरन्।

## अधिकारी

व्यक्तित्वसंघटकतत्त्वात्मका भवन्ति केचन सहजा गुणाः प्रतिव्यक्ति। ते कस्मिंश्चिद् मानवे सुप्तावस्था भवन्ति, कस्मिंश्चिच्च जाग्रदवस्थाः। अनुसंधानाधिकारित्वपरीक्षणार्थं नास्ति काचन परिमापकता। परीक्षोत्तीर्णतायाः श्रेण्याधारेण परीक्षणं न कल्पते निष्कर्षाय। प्रातिभ-ज्ञानसंपन्नोऽनुभवी च हृदयालुर्निर्देशक एवाधिकारित्वमेतत् क्षमते साधु परीक्षितुम्। प्रतिभायाः परीक्षणार्थम् अपेक्षते प्रतिभा। सा च नास्ति क्रय्या। अस्या अभावेऽध्यवसायजन्याऽधिकारि-ताया द्वितीयं स्थानम्। अस्या अप्यधिकारितायाः प्रमापकता नास्ति परीक्षोत्तीर्णतायाः श्रेणी। परीक्षोत्तीर्णतायाः श्रेण्याः सत्यपि महत्त्वे, सैव नास्ति सर्वस्वभूता। अध्यवसायजन्याधिकारिता भविष्यन्त्याः प्रतिभाया जननी "बौद्धिकं साहित्यकं च नेपथ्यम्।" अस्या अधिकारिताया निष्पक्षं साधीयश्च परीक्षणानन्तरम् अनुसंधित्सुराद्यं प्रशिक्षणमर्हति।

## अनुसंधानप्रशिक्षणम्

प्रशिक्षणकेन्द्रे खल्वनुसंधेयविषयाणां संकेतो देयः; अनुसंधित्सूनां चाभिरुचिर्जागरणीया तदर्थं प्रयासो वा विधेयः। अनुसंधानात्मके प्रशिक्षणेऽनुसंधानप्रक्रियामतिरिच्य संस्कृतवाङ्मय-स्यानुद्घाटितानां सामान्यतश्चाज्ञातानां विषयाणामपि सम्यग् विवेचनम् अनिवार्यम्। संस्कृत-वाङ्मयार्णवे बहुविधानि विषयरत्नानि ह्यविज्ञातानि सोत्कण्ठं प्रतीक्षन्ते गवेषकान्। इतश्चास्माकम् अनुसंधित्सवः संस्कृतवाङ्मये विषयदारिद्र्यमनुभवन्त इव लक्ष्यन्ते। केचिच्च पिष्टपेषणविधौ संलग्ना आत्मनः कृतकृत्यतां मन्यन्ते। प्रशिक्षणप्रावीण्याय संस्कृतानुसंधानार्थिना भाषाद्वयम् अवश्यमभ्युपेयम्। आङ्गलभाषाज्ञानस्य तदर्थमनिवार्यता। जर्मनफ्रेञ्चभाषयोरेकतरा। आङ्गल-भाषाया ज्ञानं संबद्धविषये पिष्टपेषणदोषापनुत्तये परमावश्यकम्। अनुसंधानविस्ताराय च जर्मन-फ्रेञ्चयोरेकतरा भाषावश्यकी। केनचिदपि संस्कृतविश्वविद्यालयेन संस्कृतानुसंधानार्थिनां कृते खल्वाङ्गलभाषाऽनिवार्या क्रियेत। न विना तया गतिस्तेषाम्। प्रशिक्षणकेन्द्रेष्वियमपि समुद्भावनीया जिज्ञासा। महत् खलु साहाय्यं भवेद् अनुसंधानविधौ।

## विषयनिर्वाचनम्

प्रशिक्षणानन्तरं विषयनिर्वाचनक्रमः। अनुसंधाता स्वविशेषरुचिम् अधिकारितां चाधृत्य विषयनिर्वाचनं कुर्यात्। अस्मिन् क्रमे सद्गुरोः परामर्शेन तद्विषयग्रन्थसूच्येका प्रणेया। सूच्या निर्माणानन्तरम् अनुसंधानार्थी सामग्रीपाथेयमनधिगत्य मार्गभ्रष्टो भवितुमर्हतीति तदर्थ-मुचिता दिग् निर्देशनीया।

## सामग्रीसंग्रहः

सामग्रीसंग्रह एव नास्ति द्वितीयं सोपानमनुसंधार्थिनः। संगृहीतायाः संगृह्यमाणाया वा सामग्रया अध्ययनं टिप्पण्यादेश्च कार्यं युगपदेव प्रवर्तनीयम्। अनेके प्रकारा भवन्ति सामग्रयाः। तद्यथा—

१. अनिवार्या।

२. सहायिका।

३. मुद्रिता।

४. हस्तलिखिता।

५. शिलालेखरूपा ताम्रपत्ररूपा वा।

अस्याः सामग्रया अध्ययनार्थम् अस्ति प्रचलिता विशेषप्रक्रिया—

१. पत्रपद्धतिः ( Card system )

२. टिप्पणीविधिश्च ( Notes system )

## ग्रन्थस्वरूपम् ( Outlines )

सामग्र्याः संकलनस्य तदनुशीलनस्य चानन्तरं प्रबन्धस्य विधेयः स्वरूपनिश्चयः। इदानीं विषयस्वरूपस्य शीर्षकस्य च संबन्धेऽन्तिमो निर्णयः कार्यः। प्रबन्धविषयस्य पूर्णसंकेतकं भवेद् शीर्षकम् इति तदर्थमत्यर्थं सावधानतया वर्तितव्यम्। प्रबन्धशीर्षकेण काचन विशिष्टा समस्यापि लक्षिता भवेत्।

ग्रन्थस्वरूपं द्विधा विभज्यते—

१. पूर्वानुबन्धः

२. पश्चानुबन्धश्च।

तत्र पूर्वानुबन्धस्त्रिधा विभज्यते—

१—क. प्राक्कथनम् (इह कृतज्ञताज्ञापनव्याजेन कस्यचिद् विज्ञापनं हातव्यम्। निर्देशकनाम्नोऽपि न कर्तव्यो दुरुपयोगः)।

ख. विषयसूची

ग. संकेतसूची च।

पश्चानुबन्धः प्रायस्त्रिधा विभज्यते सत्यामपेक्षायाम्—

१. परिशिष्टम्,

२. उपयोजितग्रन्थसूची,

३. नामानुक्रमणिका च,

प्राक्कथनं प्रस्तावना वा संपूर्णप्रबन्धस्य लेखनानन्तरमेव साधीयो लेखितुं शक्यते। तत्र (क) विषयोपयोगितायाः, (ख) अध्ययनक्रमस्य, (ग) प्रबन्धे स्वोपज्ञतादिकस्य च समावेशो भवति। संकेतसूच्यपि प्रबन्धलेखनान्ते रचनीया।

पश्चानुबन्धस्तु स्वनाम्नैव पश्चाद्वर्तितां सूचयति। पश्चानुबन्धे परिशिष्टं प्राथम्यमर्हति। मान्यतानां प्रस्थापनानां च स्पष्टतार्थं प्रबन्धेऽसमावेशिताया अनिवार्यसामग्र्या उल्लेखः परिशिष्टे विधेयः। यथा—१. हस्तलेखाः, फोटोस्टैट-प्रतिलिपिः, मूलकथनमादि। २. ग्रन्थसूच्यपि पश्चानुबन्धांशः। ग्रन्थसूच्या वैज्ञानिकत्वार्थं व्यवस्थितत्वार्थं च—अकारादिक्रमेणोपन्यासपूर्वकं संस्करण-लेखक-प्रकाशका निर्देशनीयाः। ३. नामानुक्रमणिका यद्यपि नास्त्यनिवार्यमङ्गं प्रबन्धस्य, तथापि संयोजिता भूषणमेव।

प्रबन्धो द्विःकृत्वो लेखनीयो भवति। आदौ प्राथमिकं रूपं देयम्। प्रथमत एव प्रबन्धो नान्तिमेन रूपेण लेखनीयः। प्रथमेन रूपेण तस्मिन् संबद्धविषयाणां विस्तृतं विवेचनम्; विस्तृतान्युद्धरणानि चापेक्षितानि। द्वितीयतोऽन्तिमेन रूपेण लेखने तत्र—

१. व्यवस्थितस्वोपज्ञं विवेचनम्,

२. उपयुक्तान्युद्धरणानि,

३. पुनरावृत्त्याः पिष्टपेषणस्य वापनोदः,

४. विवेचनाया निष्कर्षः,

५. विवेचनायां च पूर्वापरसंबन्ध ऐकात्म्यं चेत्यादीन्यपेक्षितानि सन्ति।

मल्लिनाथस्येदं वचनं परमं सहायकम् इह दिशि—

२

'नामूलं लिख्यते किञ्चिद् नानपेक्षितमुच्यते ।'

प्रबन्धलेखने तथ्यनिरूपणानां प्रस्थापनानां च महत्त्वं मूर्द्धाभिषिक्तम् । तत्रोचितानि साधीयांसि चोद्धरणान्यपेक्षितानि । कस्यचिदपि कथनस्याविकलमङ्गीकारो नामोद्धरणम् । भाषान्तरस्योद्धरणानामाशयः संस्कृतभाषायामवश्यं व्यक्तीकर्तव्यः । मान्यतानां खण्डनार्थं मण्डनार्थं वोद्धरणान्यङ्गीक्रियन्त इति तानि प्रामाणिकानि विषयानुकूलानि च भवेयुः । यद्यपि तेषामुपन्यासस्य शक्यन्ते भवितुमनेके विधयः, तथापि श्रेष्ठो विधिरस्ति तस्मिन्नेव पृष्ठे टिप्पण्यां लेखनमिति । प्रस्थापनार्थं मान्यतार्थं च तर्कसंगता संदर्भाः प्रमाणपुष्टाश्च तर्का अपेक्ष्यन्ते ।

उद्धरणोपन्यासे छद्माश्रयो न जातुचिद् ग्राह्यः । मूलग्रन्थादेव तेषां ग्रहणं साधीयः । मूलग्रन्थमनवलोक्य तदितरग्रन्थोद्धृतोद्धरणानां ग्रहणमश्रेयसे भवेत्; तत्रोद्धृतप्रमाणानामप्रामाणिकत्वेन महती हानिः ।

प्रबन्धस्यान्ते स्वल्पसंहाररूपेण गवेषणोपलब्धीनामुपन्यासो नितान्तमावश्यकः ।

## प्रतिपादनशैली

वैज्ञानिकताया अञ्चलमवलम्ब्य न शुष्कदृषच्चयनिभम् अनुसन्धानकार्यं प्रस्तोतव्यम् । तथ्यानां निष्कर्षाणां च संबन्धे लेखकस्यानासक्तसमीक्षादृशि सत्यामपि नास्ति विरोधः साहित्यिक-सरसतया सह । अत एव तत्र कलाया रचनात्मकप्रतिभायाश्च संस्पर्शोऽपेक्षणीयः । प्रबन्धस्य भाषा भवेद् अवश्यं प्रौढा, दोषरहिता, प्राञ्जला साहित्यिकी च । लक्ष्यस्यास्य प्राप्त्यर्थं सत्यामपेक्षायामनेकप्रथमरूपाणि प्रबन्धस्य रचनीयानि । टङ्कणप्रयुक्तानाम् अशुद्धीनां सम्यक् परिहारो विधेयः ।

## अनुसन्धानस्वरूपम्

अद्यत्वेऽनुसंधानकार्याणां बृहदायोजनं समन्ततः । प्रामुख्येन समाजशास्त्रीयं साहित्यिकं च । इह दिशि भाषा-दर्शन-ज्योतिष-काव्येतिहासपुराण-सांख्ययोगतन्त्रादिविषयानधिकृत्य बहुषु विश्वविद्यालयेष्वनुसंधीयतेऽनुसंधायकैः । शास्त्रीयेष्वनुसंधानेषु १. नवीनतथ्यानाम्, २. नियमानाम्, ३. संबन्धानाम्, ४. कारणानाम्, ५. परिणामानां ६. परम्पराणाम्, ७. नवीनविचाराणाम्, (निष्कर्षाणां दृक्कोणानाम्) च गवेषणा नामानुसंधानकोटिः । प्रतिविषयम् उल्लिखितेषु सप्तसु सूत्रेषु किमप्येकं सूत्रमवलम्ब्य सामग्री प्रस्तोतव्या । केनचिदध्ययनेनानुद्घाटितसूत्रस्योद्घाटनं स्याच्चेत् तर्हि तद् अनुसन्धानम् । सुबोधया साहित्यसरण्या

निबन्धरचना नामाध्ययनमेव न त्वनुसन्धानम्। एकसूत्रत्वाभावे दृक्कोणाभावे सति वा विविधपक्षप्रस्तावपूर्वकमध्ययनमध्ययनमेव न त्वनुसन्धानम्।

## आलोचनानुसन्धानयोरान्तर्यम्

आलोचना नाम मूल्याङ्कनम्। कस्या अपि कृतेः मूल्यवत्ता कियती, दोषाश्च कियन्त इति गुणदोषविवेचनम्। आलोचनाधारः—सुनियतराद्धान्तस्तत्त्वं च। यद्यपि तैस्तत्त्वैः सिद्धान्तैर्वा परीक्ष्य गुणदोषौ प्रवर्तते समालोचनेत्यनुसन्धानालोचनयोः प्रवृत्तिर्भिन्ना, तथापि समालोचनाविषयकमनुसन्धानम्, अनुसन्धानकार्यस्य च समालोचनं निर्विरोधं शक्यतेऽनुष्ठातुम्। साहित्यदर्पण-काव्यप्रकाशादयो हि समालोचनग्रन्थाः।

अनुसन्धानविषयिण्यः खलु सन्ति विविधा अवस्थाः—१. अज्ञाततथ्योद्घाटनम्, २. ज्ञाततथ्यस्य नवीना व्याख्या, ३. समन्वयश्च। इत्थमनुसंधानस्य विविधास्ववस्थासु सत्योद्घाटनमंशतो जायमानं पर्यन्ते सर्वाङ्गीणतया व्यज्यते।

अद्यत्वे परीक्षार्थिभिर्वर्षद्वयेन निबन्धस्य परिपूर्णताकाङ्क्षिभिर्विषयवर्गीकरणपूर्वकमनुसंधानं प्रवर्त्यते। तत्र च प्रतिष्ठितधारणानुरूपतथ्यानवाप्तौ, सत्यामपेक्षायां सत्यगर्भा कल्पना समाश्रीयते। साधीयः खलु तत्। तथ्यप्राप्तिसंभावनायामालस्यवशात् प्रमादवशाद् वा कल्पनासमाश्रयो महते दोषाय कल्पते। श्रेष्ठमनुसंधानं तु संप्राप्तविषयसामग्रीं पर्यालोच्य परिशील्य च पारङ्गतः स्वानुभवाधारेण वर्गीकरणपूर्वकं तथ्यं प्रस्तुयात्। तथ्यप्रस्तवनीयत्वे सामग्र्याधारेण तदनुरूपकल्पनासमाश्रयो न दोषाय। विभिन्नस्रोतोभिः समुपलब्धतथ्यानि स स्वविवेकनिकषेण परीक्ष्य गृह्णाति रागद्वेषविनिर्मुक्तः सन्। सत्यात् परं न तत्प्रेयः, सत्योद्घाटनप्राधान्यात्। असत्यमूलकत्वे तत्कृतेरप्यसत्यमूलकत्वाद् विगानम्। सत्यस्य विस्पष्टतार्थं तथ्यप्राप्त्याधाराः पूर्णतया निर्देश्याः। प्रमाणनिर्देशाभावे कल्पितव्याख्यादिपरीक्षणं न स्यात् सुकरम्, उद्धरणाभिप्रायाणां स्वीयनिष्कर्षादीनां च भेदोऽपि न भवेत्। निष्कर्षतो भावचौर्यं न्यक्कृत्य सत्यप्रतिष्ठाऽनुसन्धानमूलम्।

## अनुसंधानस्य पूर्वपीठिका

'भिन्नरुचिर्हि लोकः' इति दृशा स्वरुचिपूर्वकं सर्वतः प्रथमम् अनुसंधास्यद्भिरनुकूलविषयसूची निर्मेया। ततः पश्चात् स्वाभिमतविषयाणाम् १. अननुसंहितो विषयः, २. अनुसंहितश्चेदपूर्णप्रकाशः, ३. पूर्णविवेचितश्चेत्—नवीनदृशा व्याख्यापेक्षः स्वीकार्योऽनु-

सन्धानार्थम्। एतत् सर्वं प्राप्यसामग्र्यध्ययनेन तद्विषयविशेषज्ञपरामर्शेन वा ज्ञायते। अन्यथा पूर्वानुसंहितकार्यस्य पिष्टपेषणदोष उपतिष्ठेत।

विषयसीमा तथा विस्तृता न स्याद् यथा निर्धारितसमयेन कार्यमेव न समाप्येत। अनुसन्धायकेन स्वयोग्यता ज्ञायेत। योग्यताभावेन विषयसीम्नश्च सुविस्तृततयाऽनुसंधाता निष्फलो भवति। एकदा मत्परिचितयाऽनुसंधात्र्या 'प्रातिशाख्यानां व्याकरणेन तुलनात्मकम् ऐतिहासिकं समालोचनात्मकं चाध्ययनम्' इति विषयोऽङ्गीकृतः। तया पारम्परिकपद्धत्या व्याकरणं कदापि न पठितम्। एम० ए० परीक्षायां निर्धारितकारकप्रकरणात्मकं व्याकरणज्ञानं तदीयः सीमा। वेदविषयं गृहीत्वा एम् ए० परीक्षायां प्राथम्येनोत्तीर्णत्वात् तस्यास्तत्राभिनिवेश इति योग्यताभावेन विषयसीम्नश्च विस्तृतत्वात् सप्तवर्षेष्वपि न तन्निबन्धपरिपूर्णता जाता। प्राथम्येन परीक्षोत्तीर्णतामात्रेण न पार्यतेऽनुसंधानकार्यमनुष्ठातुम्। निष्कर्षतः स्वयोग्यतानुरूपं विषयवरणं तत्सीमानिर्द्धारणं च हितावहम्। व्याकरण-साहित्य-दर्शन-पुराणेतिहासादिषु प्रत्यङ्गमनुसंधानेन तत्तदङ्गमधिकृत्य शक्यते कर्तुं गहनमध्ययनं विवेचनापूर्णसामग्र्युपस्थापनपूर्वकम्।

विषयसीमानिर्धारणान्तेऽनुगुणं शीर्षकं कुर्यात्। तच्चानतिविस्तृतं स्वप्रतिपाद्यविषयनिर्देशकम् अवश्यं स्यात्।

अनुगुणशीर्षकमनुस्वरूपपरिचयस्य विषयानुक्रमण्या वा महत्त्वाधायकः प्रक्रमः। गृहीतविषयक्रमानुसारेण स्वरूपपरिचयः संक्षिप्तोऽपि सुस्पष्टः स्यात्। स स्वरूपपरिचयो भवदनुसन्धानदिक्कोणं स्पष्टीकुर्यात्—भवान् केन सिद्धान्तेन किं तथ्यमाविश्चिकीर्षतीति। अस्पष्टस्वरूपपरिचयेनानुसंधातुरयोग्यता तत्परतानैयून्यं च प्रतीयते।

स्वरूपपरिचयसंपत्तौ सामग्री संचेया। तत्प्राप्तिस्रोतांसि—

१. प्रकाशितपुस्तकानि,

२. पाण्डुलिपयः,

३. अप्रकाशितपाण्डुलिपयः,

४. पत्रिकाः,

५. राजकीयाः सूचना अराजकीयाश्च,

६. विशेषज्ञसंपर्कश्चेति।

तद्विषयविशेषज्ञानां परामर्शेन सन्दर्भसूचीनिर्माणपूर्वकमध्ययनं प्रक्रमेत। प्रकाशित-पुस्तकानां पाण्डुलिपीनां चोपयोगार्थम् आदर्शपुस्तकालयाः शरणम्। दुर्लभपाण्डुलिपीनां संस्थाविशेषाधीनत्वाद् व्यक्तिविशेषाधीनत्वाद् वा तदुपयोगोऽनुसंधातॄणां महते दुःखाय जायते। एवमवस्थायां प्रतिष्ठितजनसहयोगेन दुर्लभपाण्डुलिपीनां प्रतिलिपिः कर्तव्या तच्चि वा प्रापणीयम्।

सामग्रीसंचयानन्तरम् अपेक्षितप्रसङ्गेषु टिप्पण्यो लेख्याः। यस्मात् पुस्तकाद् यस्याः पत्रिकायाः सकाशाद् वा टिप्पणी गृह्येत, तदीयं नामपृष्ठसंख्यादिकं सुस्पष्टं लेख्यम्। कस्यचिद् लेखकस्य सारो यदि गृह्येत, तर्ह्यविकलो न तु सारांशः।

अनुसंधाने पूर्वाग्रहः सर्वथा त्याज्यः। पूर्वनिर्णीतमन्तव्यान्येव न प्रमाणपुष्टीकरणीयानि। तटस्थवृत्त्या स्वविषयचयनविश्लेषणकर्तुर्वैज्ञानिकस्य तुल्यः स्यादनुसंधातुर्दृष्टिकोण इति स्वमताग्रह-पूर्वकं नौचित्यमावहत्यनुसन्धानकार्यम्। राष्ट्रप्रेमवशीभूता जातिस्नेहाकृष्टा वाऽनुसंधायका बलपूर्वकं तथ्यानां निष्कर्षमाविष्कुर्वन्ति भ्रामकम्। नैषाऽनुसंधानपद्धतिर्वैज्ञानिकी। अनुसंधायकस्तु सम्प्राप्तसामग्र्याधारेण निष्कर्षान् प्रस्तुयादितीयमजिह्मा राजपद्धतिस्तदीया।

प्राप्यसामग्रीं क्रमानुसारेण विन्यस्य, तत्र च टिप्पणीनां संपत्तौ सत्याम् अनुसंधायकः प्रबन्धं लेखितुम् उपक्रमेत। विषयक्रमानुसारेण नियतेष्वध्यायेषु टिप्पणीसामग्रीम् उपयुञ्जीत। अन्वेकतथ्यम् अपरतथ्यस्य सनिष्कर्षं प्रस्तुतिः कार्या। यथापेक्षं पादटिप्पणीषु संदर्भग्रन्थोल्लेख-स्तत्पृष्ठसंख्यादिकं निर्देश्यम्।

स्वमतसमर्थनप्रमाणानि विरोधिमते निर्वचनानि च सोल्लेखं विधेयानि। पक्षविपक्षीय-सामग्र्या निष्पक्षभावेन तोलनं धर्मः खल्वनुसंधायकस्य। प्रबन्धस्य भाषा प्रसादगुणपूर्णा स्यात्। दुरूहभाषया तथ्यनिरूपणं संदिग्धं प्रतीयत इति प्रबन्धो निकृष्टो मन्यते। अतोऽभीष्टं कथनं सप्रमाणं सतर्कं प्रसादया गिरोपस्थाप्येत।

व्याकरणदृशा संस्कृतभाषा विश्वभाषासु पूर्णतमा व्यवस्थिता चेति सा वैज्ञानिकी। तत्र स्वरोच्चारणस्य शब्दव्युत्पत्तेश्च वैज्ञानिकी विवेचना। ब्राह्मणग्रन्थेषु प्रातिशाख्येषु च बहुत्र विवेचनमित्थम्। व्युत्पत्तिविश्लेषणं नाम निर्वचनं यास्कग्रन्थे निरुक्ताभिधे सुमनोरमम्। अष्टा-ध्यायीव्याख्याभूतस्य महाभाष्यस्य तुला नास्ति शब्दसाधुत्वक्षेत्रे। एवं खलु भाषायां व्याकरणे च प्राचीनकाले महत्त्वाधायकमनुसंधानं कृतं भारतीयैराचार्यैः। समग्रवाङ्मयस्य विभाजनमपि सुवैज्ञानिकरीत्या संजातम्।

संपूर्णवाङ्मयस्य विभागोऽपि वैज्ञानिक्या दृशा जातः। वैदिकसाहित्यस्य संहिताब्राह्मणारण्यकोपनिषत्स्वपि भेदप्रभेदाः। वेदानामप्युपवेदाः सन्ति—आयुर्वेदधनुर्वेदगन्धर्ववेदतन्त्रवेदाभिधानाः। अस्य संपूर्णवेदराशेरपि षडङ्गानि शिक्षाव्याकरणछन्दोनिरुक्तकल्पज्योतिषाभिधानानि। एतेषु सर्वेषु विषयेषु सुदीर्घतपःप्रभावेण गवेषणापूर्वकं भारतीयैराचार्यैर्विविधा ग्रन्थाः प्रणीताः स्वोपज्ञाः। ते किल सार्वकालिकत्वं सार्वभौमत्वं च भेजिरे। तेष्वपि महिष्ठानि भाष्याणि प्रणिन्यिरे स्वोपज्ञानि। पातञ्जलमहाभाष्यं सूत्रभाष्यातिरिक्तं विभिन्नदेशीयभाषाणामुल्लेखसमलङ्कृतम्; वैदिकलौकिकभाषैतिह्यविराजितं च।

काव्यशास्त्रविवेचनापि सुविस्तरेण कृतोपलभ्यते। तत्र काव्यग्रन्थेषु रसालङ्कारछन्दोगुणदोषरीतिप्रभृतिषु ग्रन्थरचना। एवमेवायुर्वेदमधिकृत्य प्रभूतग्रन्थराशिरधिगम्यते। छन्दोज्योतिषविषयका अपि पुष्कलविचाराः। ज्योतिषे गणितविद्यातिरिक्तापि फलितज्योतिषविद्या नक्षत्राधारिका निकामं प्राप्तप्रचारा बभूव। धनुर्वेदीयपरम्परायामवश्यं न दृश्यते तादृशो विकासः।

प्राचीनभारतीयविश्वविद्यालयेषु पठनपाठनप्रणाल्या बौद्धग्रन्थैर्वैदेशिकयात्रिकविवरणेन चोत्तरकालिकपरम्परया आभासमात्रं प्राप्यते। तेषु विश्वविद्यालयेष्वनुसंधानकार्यविषयको विवरणप्रकारः सुदुर्लभः। नन्दराज्ये पाणिनेर्ग्रन्थपरीक्षाऽवश्यं श्रूयते। तेषु विश्वविद्यालयेषु तत्तद्विषयाणां विशेषीकरणप्रथा सुतरां भवेत्, परिणतानुसंधानस्य च विदुष उपाधिप्रदानपरम्परा चावश्यं भवेत्। संभवतो नालन्दाविश्वविद्यालयसमाप्त्यनन्तरमेव भारतीयानुसंधानशिक्षाप्रणाल्यपि समाप्तप्राया जाता।

एकोनविंशखीस्ताब्दे भाषादृशा संस्कृतभाषां प्रति समाकृष्टाः पाश्चात्त्या संस्कृतभाषाजगति पुनरनुसंधानसूत्रपातमकार्षुः। ततोऽनेकैः पाश्चात्त्यैर्विद्वद्भिः संस्कृतभाषासाहित्याध्ययनकर्मणि जीवनं समर्पितम्, अनुसंधानदिशि च महत्त्वाधायका विचारा उपस्थापिताः। अत एव वयं पाश्चात्त्यविदुषामधमर्णाः संस्कृतभाषाया पुनरुत्थित्यै तदनुसंधानकृत्यै वा। अस्मिन् पक्षे तेषामाधमर्ण्यस्वीकृतिर्न नो हीनताभावनासूचिका।

## अनुसंधानकला

अनुसंधानं वैज्ञानिककार्यम् इति तत्र वैज्ञानिप्रणाल्यैव (१) विधेर्विधानस्य (२) दृष्टिकोणस्य चापेक्षणीयता। शोधसामग्रीसंग्रहः प्रथमा पीठिका, तस्य च क्रमबद्धव्यवस्था द्वितीया पीठिका। वस्तुतोऽनुसंधानकार्यार्थं पीठिकाद्वयमपरिहार्यम्। द्वितीया पीठिका पाश्चात्त्यैर्विद्वद्भिर्विशेषतोऽधिक्रियते, तदर्थं च तत्र विशिष्टकला ( विद्या ) परिभाषेव वा समास्थापिता।

साऽनुसंधानकार्यस्य भित्तिमूलं शक्यते वक्तुम्। यद्यपि विषयस्तावद् हृद्यतमो महिष्ठश्च भवितुं शक्नोति, सामग्रीमपि पर्याप्तं संगृह्णन्ति संग्राहकाः, लेखनकलायामपि प्रवीणा भवन्ति प्रज्ञाः, तथापि व्यवस्थितरीत्या वैज्ञानिकरीत्या च नैतत् सर्वम् उपयोक्तुं शक्नुवन्ति। फलतः कदाचिद् विषयसीमातिक्रमणदोषभाजः, कदाचिच्च विलोपितावश्यकतथ्या विद्यार्थिनो न तथा वाच्या यथा निर्देशकाः। अद्यत्वे विद्यार्थिष्वनुसंधानलहरी व्याप्ता। अस्मिन् दृढाग्रहे च ते विषयानुपयोगिताम् आत्मनोऽयोग्यतां समयाभावं सामग्र्यप्राप्त्यादिकं विस्मृत्य 'रिसर्चस्कालर' इति ख्यापनेन विशिष्टं गौरवमनुभवन्ति। एवमेव निर्देशका अपि निर्देशकत्वप्रापणविधौ स्वकीयं संमानमवगच्छन्ति। वस्तुतो यत्रैकस्यां दिशि निर्देशकस्य विषयविशेषज्ञताऽपेक्ष्यते, तत्रापरस्यां दिशि तस्यानुसंधानकार्यकलाभिज्ञतापरिचयोऽपि कार्त्स्न्येन परमापेक्षणीयः। अत एवानुसंधातृमार्गबाधको योग्यनिर्देशकाभावः।

उपयोगिन्याः सामग्र्या अप्राप्तिर्नाम तृतीया बाधा। विषयनिर्वाचनकाले नास्माकं ध्यानं सामग्रीं प्रति भवति, किन्तु विषयस्वीकृतिं प्रत्येव तत्। विषयप्रवेशानन्तरम् उपयुक्तसामग्र्यभावेन कार्यं तद् दुस्तरं प्रतीयते। भाषाविज्ञानप्रतीकाशविषयाणामनुसंधानार्थमस्माकं विश्वविद्यालयेषु संप्रति नोपयुक्तानि यन्त्राण्यपि। साहित्यविषयाणां सामग्रीसंग्रहरूपकार्यं श्रमसाध्यमप्यस्ति साध्यमपि, किन्त्वेकाकिनः कृते दुःसाध्यम्। सामूहिकप्रयासैरेव शक्यते सा संचेतुम्। इदं च तदैव संभवि, यदा विषयविशेषस्यानुसंधानम् एकस्यामेव संस्थायां भवेत्। तत्र खलु सामग्र्यपि शक्यते राशीकर्तुम्, निर्देशनस्य चापि व्यवस्था शक्यते भवितुं सुप्राप्या। एतदभावेऽनुसन्धानकर्मणि संपूर्णता न पार्यते कर्तुम्। सत्यप्यनुसंधाने विषयेषु निश्चयात्मकता न पार्यते समनुष्ठातुम्। यथा भासकालिदासभवभूत्यादीनां कविवराणां पारिवारिकं विवरणं निश्चयेन नानुसंहितम् इति तिमिरावृतम्।

## विषयनिर्वाचनम्

अनुसंधानकर्मणि तृतीया बाधा विषयनिर्वाचनस्य। विषयवरणकाले विद्यार्थिनो निर्देशकाश्च तदुपयुक्ततां क्षेत्रं च प्रति नावदधतीति विषयसामग्र्योर्न भवति समञ्जसतेति तावत् प्रथमा पीठिका। द्वितीयस्यां पीठिकायां सर्वेषु विश्वविद्यालयेषु शोधविषयिण्याः समीकरणोचितव्यवस्थाया वैधुर्येण विषयपौनर्वृत्त्यं सामान्यप्रायम्। ये विषया वस्तुतोऽनुसंधेयतामर्हन्ति, तत्र नास्माभिरवधीयते। निरर्थं चानावश्यकान् विषयान् वरीत्वा कार्यनिरता भवाम इति साहित्यसमृद्धौ न जायते विशिष्टं साहायकम्। अद्यापि संस्कृतभाषादिक्षेत्रे भूयिष्ठाः पक्षाः सन्त्यपरा-

मृष्टाः। अद्य संस्कृतजगति नवीनस्तुलनात्मकश्च दृष्टिकोणः प्रकाममपेक्षणीयः। नवीना मानयुक्तयः ( मानदण्डाः ) प्रयोगाश्चावलम्बनीयाः संस्कृतभाषाद्यनुसन्धानक्षेत्रे। विज्ञानविषयक-पुस्तकानां संस्कृतभाषायामभाव इति दोषोऽयं प्रमार्जनीयः। विश्वविद्यालयीयपत्रिकायाम् अनुसंधानकार्यविवरणानि, पक्षपातविहीनाः समालोचना उपयुक्ताश्च परामर्शाः स्थानं लभेरन्। विशेषाश्चानुसंधानविषयकनिबन्धलेखनप्रकारकाः संकेताः पर्याप्तं तत्र स्युः। एवं सत्यनुष्ठिते संस्कृतभाषानुसंधानकार्यं सुव्यवस्थितं भविष्यति, विशेषज्ञानां योग्यतालाभो भूयिष्ठतया शक्यते ग्रहीतुमनुसंधायकैरिति।

## अद्यतनी स्थितिः

अद्यत्वे अनुसंधानस्थितिर्न संतोषप्रदा, अनुसंधानकार्यमहत्ताया याथार्थ्यतोऽनवगन्त-व्यत्वात्। साम्प्रतम् अनुसंधानं विद्यावारिधिः (पी-एच्० डी०), वाचस्पतिः (डी० लिट्) इत्या-द्युपाध्याप्त्यर्थं व्यवसायदृशा विधीयमानम् इत्यनुसंधित्सूनां दशापि परीक्षार्थिनामिव जाजायते। निर्देश्यः सरलो विषयः, येन गृहस्थितेनैव मया कार्यं संपाद्येत, वैदुष्यं कामये नाहम्, उपाधिस्तावन्मे दाप्य इति प्रार्थयते परामर्शदातारम्। प्रबन्धेन सार्धमेव स परीक्षका-नुसंधाननिरतो दृश्यते, चेष्टते च स्वानुकूलपरीक्षकनियोजनाम्। इदं सर्वं कार्यजातम् अनुसंधानकार्यघातकम्।

अनुसंधानकार्यार्थम् आवश्यकं वातावरणं सौविध्यं च नितान्तमपेक्षणीयम्। क्वचिद् विश्वविद्यालयेषु तु कस्यापि विभागस्याध्यक्षेऽनुसंधानकार्यसूत्रधारयोग्यता मन्यते। सोऽननुष्ठितानुसंधानोऽविदितानुसंधानतत्त्वोऽपि संचालयति गवेषणाकार्याणि। बाहुल्येन त्वाचार्यकक्षाणां पाञ्चवर्षिकोऽध्यापनानुभवस्तेषां तादृशयोग्यताप्रमापको मन्यते। आचार्यादि-कक्षाणामध्यापनम्, अनुसंधानकार्यसंपादनं च वस्तुद्वयम् इति तदीया षट्त्रिंशदङ्कवत् सर्वथा प्रतीपता विज्ञेया। आचार्यादिकक्षाध्यापकानां कस्यापि विषयस्य साङ्गोपाङ्गं ज्ञानं प्रभवेदयमप्येकः प्रश्नः। आचार्यादिपरीक्षाणामध्ययनं पाठ्यपुस्तकपरिध्यविमुक्तम्। पाठ्यपुस्त-कानां सम्यग् वेत्ता न सर्वोऽप्याचार्याध्यापकस्तादृशवैदुष्यसंपन्नानां पङ्क्त्यर्हः। एतादृशेभ्यो वराकेभ्योऽनुसंधानाधीक्षकेभ्यः कः परामर्शः शक्यतेऽवाप्तुमनुसंधित्सुभिः। अनुसंधानपरिणामे किं मूल्यं तत्संमतेः। विश्वविद्यालयानां सांप्रतिके वातावरणे विधानजाड्यतः खल्वेतादृशेभ्य एवाध्यापकेभ्य इदं गौरवं समर्प्यते। इदमपि कारणं संस्कृतानुसंधानकार्यमानदण्डानभिनन्द-नीयतायाः। एत एव विधाननिर्मिता विद्वांसस्तत्त्वज्ञाश्च बाहुल्येनानुसंधानपूर्वकं लिखितप्रबन्धानां

परीक्षकाः क्रियन्त इति ते तेन प्रबन्धेन किं न्यायं विधास्यन्ति ? तदीया निर्णयाः स्वरुचिमवलम्बन्ते न त्वध्ययनमननपरीक्षणानि । यदि कांश्चिद् विश्वविद्यालयान् प्रतिप्रेषितानां प्रबन्धानां परीक्षकसूची प्रस्तूयेत, तर्हि मनोविनोदनीयानि तथ्यानि शक्यन्ते प्रकाशयितुम् । एतेषु परीक्षकेषु तादृशा अपि प्राप्यन्ते, यैर्न विज्ञायते प्रबन्धविषयसंबद्धम् एतावच्चिरं कियत् साहित्यं प्रकाशितम् इति, न च तैस्तद्विषयकमतिरिक्तं पुस्तकं पठ्यते । एतेषु परीक्षकेषु तादृशा अपि, येषामनुसंधानपञ्जीकरणं दशमासाधिकं न भवति ।

प्रबन्धानां परीक्षकैर्विशेषज्ञैरेव भाव्यम् । एवं सत्यप्येतेषु परीक्षकेषु द्वित्रा एव विशेषज्ञा भवन्ति । आधिक्येन तु परीक्षकाणां तद्विषयकं न भवति ज्ञानसाधारण्यमपि । याथार्थ्येन विशेषज्ञास्तु विश्वविद्यालयनियमप्रतिबन्धतया परीक्षकतानर्हा एव । एतस्याः स्थितेः कारणादेवाद्य संस्कृतानुसंधानदुर्दशा । यद्यपीयं दशा प्रायः सर्वेषामेव विषयाणां संबन्धे शक्यते वक्तुम्, तथापि संस्कृतानुसंधानकार्यस्य पश्चात्तनत्वात्, इतः पूर्वं शास्त्रीयालोचनात्मकं साहित्यदर्पणादि-रूपं टीकाटिप्पण्यात्मकं वा कार्यमेव संस्कृतविद्वद्भिः समनुष्ठितम् । वर्तमानानुसंधानकार्यपद्धतिः पाश्चात्यशिक्षोपलब्धेति तादृशी योग्यता तादृशशिक्षादीक्षामूलिका । प्रायः केषुचिदपि विश्वविद्यालयेषु संस्कृतभाषानिबद्धा अनुसन्धानप्रबन्धा नोरीक्रियन्ते वाराणसेयसंस्कृतविश्व-विद्यालयं विना । अत्राप्येतत् कार्यं नववर्षेभ्यः प्रागेव प्रचलितमिति बाल्यं तदीयम् । इदमपि कारणं यत् संस्कृतभाषानुसंधानस्य सुदृढा सुस्थिरा च परम्परा नाशक्यत निर्धारयितुम् ।

संस्कृतविद्वांसः स्वप्रतिभाद्याश्रिता अनुसंधानकार्यदृढपरम्पराप्रवर्तने बद्धपरिकरा भवेयुः । संस्कृतजगति प्रतिभाशालिनां विदुषां नास्त्यभावः । तेषां सहयोगेन गम्भीरतापूर्वकम् अनुसंधानसमस्या विचार्य संस्कृतभाषानुसन्धानकार्यं प्रेरणाप्रदम् आदर्शस्वरूपं च कर्तुं शक्यते ।

## अनुसंधानकार्यस्य वास्तविकं स्वरूपम्

अनुसंधानकार्यं सुविपुलं गुरुतरं च । एतच्च ग्रन्थलेखनाद् निबन्धलेखनाद् वा भिन्नम् । "मया बहूनि पुस्तकानि लिखितानि, मदीया भूयिष्ठा निबन्धाः पत्रिकासु प्रकाशिताः" इति मनसिकृत्य बहवो जना अनुसंधानपूर्वकप्रबन्धलेखनं तृणाय मन्यन्ते । इयं तावद् आत्म-प्रवञ्चनानीतिः । एतादृशा लेखका अनुसंधानकर्मणि महत् काठिन्यमनुभवन्ति ।

ग्रन्थनिर्माणम् आहोस्विद् निबन्धलेखनम् अनुसंधानप्रबन्धलेखनाद् भिन्नम् । ग्रन्थादिनिर्माणं तावद् प्रणेत्रभिरुचिं तदभिमतं च व्यनक्ति. अनुसंधानप्रबन्धलेखनं तु विषयस्वरूपं स्पष्टयति । ग्रन्थादिनिर्माणं खलु निर्मातृज्ञानसीमानं प्रकाशयति, अनुसंधानप्रबन्ध-

लेखनं तु विषयप्रामाणिकत्वं दर्शयति। प्रथमे तावल्लेखको यावच्छक्यमुपस्थापयति, द्वितीये तु पूर्णतानिबन्धिनी दृष्टिर्लेखकीया। सारांशतः प्रथमे व्यक्तित्वप्राधान्यम्, द्वितीये च विषयप्राधान्यमित्येतदुभयोरान्तर्यम्। एतेषां भेदानां सत्त्वे सामान्यलेखकोऽनुसंधानप्रबन्धलेखने महत् कष्टम् अनुभवति।

सामान्यलेखकस्य चत्वारो दोषाः। ते चेमे—

१. यथेच्छं लिखित्वा प्रकाशयेदित्यभ्यासः।

२. अविचारितरमणीयवचनैर्विषयो रोचकः क्रियेतेत्यभ्यासः।

३. भाषाचमत्कृत्या शैलीचमत्कारोत्पादनमित्यभ्यासः।

४. प्रमाणवैकल्येऽपि स्वविश्वासबलेन किमपि लिखेत्।

साधारणलेखकधर्मो लेखनम्। अनुसंधानप्रबन्धरचयिता तु प्रतिशब्दं प्रतिपङ्क्ति च सप्रमाणं निबध्नाति परिपूर्णतया। स यत् किमपि लिखेत् तत्र न किञ्चिदनावश्यकम्, न काचित् निरर्थिका सामग्री न, च तत्र शब्दवाक्यादीनामपव्यय इति प्रबन्धलेखकधर्मः। अतः प्रबन्ध-लेखककार्यम् उत्तरदायित्वपूर्णम्। कार्यमेतत् धैर्यपरिश्रमापेक्षं नीरसं चेति।

अनुसंधित्सोः पूर्णाग्रहः स्यात् खलु सत्यप्रतिपादनपरः, न तु स्वाभिमतारोपपर आहो-स्विद् रुच्यभिरोपपरो भवेत्। बहूनामनुसंधित्सूनाम् एवमाग्रहो लक्ष्यत इति तेनानुसंधानस्वरूपं भ्रश्यति। अनेकैर्विद्वद्भिर्भारते भक्त्युद्गमः खीस्तधर्मप्रभावज इति साधितुमचेष्टि। चेष्टैषा भ्रामिका न तु सत्यप्रतिपादनम्। एषा चेष्टा लेखकस्यानुमानमेव पुष्णाति। ऐतिह्यक्षेत्रे तु इत्थंभूता बहवो दुराग्रहा दृष्टिपथमेष्यन्ति। अनुसंधानं नाम नाग्रहाधारेण, न चाहङ्काराधारेण, न वा भावुकतावेशेनैव। कस्यापि क्षेत्रस्यानुसंधानं पूर्णतो विशुद्धमत्या विधीयेत। इह शुद्धबुद्धि-र्भूयिष्ठतया वाञ्छनीया। एतद्वैधुर्ये नानुसंधानमूल्यं किमपि।

प्रबन्धे १. सामग्री, २. अभिव्यक्तिश्चेति तत्त्वद्वयं नास्त्यविदितं तज्ज्ञानाम्। अनुसंधाता सामग्रीं शीर्षण्यतया संगृह्णाति महत्त्वं चार्पयति। तत्रापि सामग्रीं स द्विधा परीक्षते—१. किं प्रत्येकं वस्तु प्रामाणिकम् इति, २. तत्र किमपि नैयून्यं न भवेदिति किं परिपूर्णमस्ति तदिति। प्रामाणिकता तेन साधनीया भवति। तथा कर्तुं सोऽन्तःसाक्ष्यं बहिःसाक्ष्यं च गवेषते। किमपि तत्त्वं यथासाध्यम् अनुमानमात्राधारेण न प्रस्फोर्येत। अनुमानाश्रयेण प्रस्फोरणीयतायां तत्त्वानाम्, यथासंभवं प्रमाणाधारकत्वं स्यात् तेषाम्। स समुपलब्धानि प्रामाणिकानि वस्तुसंबन्धीनि निखिलानि तथ्यानि प्रस्तुयात्। तेषां समुपलब्धानां प्रमाणानां साहाय्येनानुमानीयता प्रामाणिकी

भविष्यति। भूयॅनुमानीयतास्थितौ संभाव्यदृष्टिवैशिष्ट्येन परीक्षणीयता दुर्निवारा। एतादृश्यनुमानीयता तत्रैव श्लाघ्या, यत्र तत्संबन्धीनि यथार्थतथ्यानि सत्यामपि गवेषणायां नोपलब्धानि स्युः। आलस्यवशेनाध्ययनवैधुर्यात् तत्तथ्यानवाप्तावनुमानाश्रयेऽनूनकः परिश्रमो मोघः स्यादनुसंधायकस्य। उदाहरणार्थम्—कस्मिंश्चिद् शोधप्रबन्धे "अवेर्दुग्धे सोढदूसमरीसचः" इति कात्यायनीयवार्त्तिकम्। "दुग्धस्थानीयदूसशब्दस्य सम्बन्धः 'दूष्य'—शब्देन वर्तते। अवीनां दुग्धं दूषितं भवति। नेत्रयोर्मलस्य कृतेऽपि दूषिकाशब्दप्रयोगः। दूष्यशब्दो हि पटकुटीरवाचकोऽपि" इदं कथनं प्रायेण प्रबन्धगौरवं विलोपयति, यतो हि सर्वमप्यनुमानं निराधारम्। दूसशब्दः दूष्यशब्दाद् विकसितः—कथम्? केन प्रकारेण? दूसशब्दस्य दूष्यशब्दप्रभवत्वं साधयितुं निबद्धा दूसशब्दप्रयोगा गवेषणीया आसन्। कात्यायनस्य भाषाक्षेत्रप्रवृत्तिरवगन्तव्यासीत्। दक्षिणतः पश्चिमायां दिशि भाषासु प्रयोग एतदीयः स्यात्, तर्हि स कोशेषु द्रष्टव्य आसीत्। संक्षेपेण च तदुल्लेखः प्रबन्धेऽवश्यमासीत् करणीयः। एवं सति सोऽनुमानमेतत् प्रामाणिककोटौ गणयितुं प्रभवति स्म। अनुसंधित्सुनानेन दूसशब्दोऽनया दृशा गवेषितोऽभविष्यत्, तर्हि स नूनं फलभागभविष्यत्। उदाहरणतः सिन्धुप्रदेशीयभाषायां खर्जूररसनिष्कासनार्थे दूस-धातुप्रयोगो लभ्यते, जिप्सी-(रोमानी)भाषायां च दूश्‌धातोः प्रपूरणार्थकता। इयं रोमानीजाती राजस्थानप्रदेशात् पञ्चालप्रदेशाद् वा गता विदेशेषु तुर्कब्रिटिशादिषु यायावरत्वरूपेण संप्रत्यपि जीवति। अनेन प्रकारेण दूसशब्दमूलस्यानुमानेन निर्धारणम् अप्रामाणिकं भ्रामकं च सिद्धम्। एतत्साधनाय दूष्यशब्दस्थितिकल्पना लेखककृतोपहासास्पदा जाता।

अवेर्दुग्धे दूषणकल्पना सर्वथा कल्पना सिद्धा। यदि द्वितीयं पटकुटीरानुमानं सत्यं भवेत्, तर्हि तदानीमपि पटकुटीराश्रयेणावीनां संबन्धस्य साधनार्थम् ऐतिहासिकप्रमाणप्रस्ताव आसीद् अपेक्षणीयः—अन्यत्रापि पटकुटीराश्रयोऽजादीनामपि संबन्धे घटत ऐतिह्य इति। एतेनोदाहरणेन सुस्पष्टं यद् अनुसंधित्सुनाऽनुमानाश्रये न त्वरणीयम्। अनुमानं पुष्टयितुमुपस्थापनीया संपूर्णा सामग्री भ्रान्तिनिरसनरूपा। किमपि कथनमप्रामाणिकम् अपुष्टं च न स्यात्।

हिन्दीभाषाया बीहड़शब्दमूलं 'विकट-' इति निश्चीयते। अद्यतनेषु नवीनतमग्रन्थेष्वपि तदेव लिख्यते। एवंविधभ्रमपरम्परान्तः किं कदापि भवितुमर्हति? अनुसंधानप्रबन्धाः प्रतिपङ्क्ति सप्रमाणाः स्युरित्येव तदीयं गौरवम्। एतादृशभ्रमपूर्णानुसंधानप्रबन्धस्य लेखकोऽनुसंधित्सुरेव न प्रमाददोषभाक्, किन्तु तदीयो निर्देशकोऽपि वाच्यो यन्न तेन विद्यार्थी साधूपदिष्टः, तथ्यानां पर्यवेक्षणं च न सावधानतया विहितमिति। एतदपि वक्तुं शक्यते यत् तेनापि सम्यग् ज्ञाताः

स्युरनुसंधानविषयः। परीक्षका अपि स्वीकुर्युरेतादृशं प्रबन्धं चेत्, तेऽपि प्रमाददोष-निर्लिप्ता न भविष्यन्ति। इयं सुचिन्तनीया स्थितिः। अस्याः परिमार्जनं नितान्तमावश्यकम्। अन्यथा न केवलं वैदुष्यह्रासः संस्कृतभाषायाम्, अपि तु संस्कृतसाहित्यमपि मिथ्यातथ्यपोटलिका भविष्यति।

निष्कर्षतोऽनुसंधानप्रबन्धे मनोनुरूपाण्यनुमानान्याश्रयितुमशक्यानि। प्रतिकथनं साक्ष्य-पुष्टिः प्रमाणसिद्धिश्च स्यात्। प्रमाणत्वेन यत् साक्ष्यमुपस्थाप्येत, तदपि प्रमाणविरहितं न भवेत्। केनापि प्रबन्धनिर्देशकेन प्रबन्धसंबन्धे मनागपि प्रमादो नानुष्ठानीयः। तेन प्रतिशब्दं प्रतिवाक्यं च मननीयम्। सामग्रीपरिपूर्णताविषये च समीचीनतयाश्वस्तेन भाव्यम्। विवेचनाक्रमे युक्ति-क्रमे प्रमाणानां सम्यक्त्वे च न किमपि सन्देहस्थानं त्याज्यम्।

इँग्लिशभाषायाः सम्यग् ज्ञानमन्तराऽनुसंधानस्वरूपस्य सुरक्षा न सुशक्येति स्वानु-संधानविषयशिरोमणीनां सुगृहीतनामधेयानां विदुषां कथनम्। इँग्लिशभाषाज्ञानविरहित-विद्वत्प्रेषितानुसंधानप्रबन्धपरिणामदर्शनेन तेषामयं निष्कर्षः। एवंभूतेष्वनुसंधानप्रबन्धेष्वनुसंधान-स्वरूपस्य ह्रासः सुस्पष्टं विलोक्यते तैः। संस्कृतानुसंधित्सूनामिदं कर्तव्यं यत् ते संस्कृतानुसंधानं शीर्षण्यतां प्रापयेयुः। संप्रति दयाद्रुरुपयोगो नानुष्ठेयस्तैः। अनुसंधानकर्मठतार्थम् अनुसंधित्सु-भिर्यदि साम्प्रतं न स्यात्, तर्हि भविष्यति, इँग्लिशभाषातिरिक्ता फ्रेंचजर्मनभाषयोरेकतराऽवश्य-मध्येया।

विषयः—विषयनिर्वाचनम् अतिमनोयोगपूर्वकं कृतं भवेद् अनुसंधित्सुप्रवृत्त्यनुकूलम्। स च विषयोऽनुसंधानापेक्षः, शक्यसामग्रीसंग्रहः, अनुसंधानपूर्वकं महत्त्वपूर्णोपलब्धिसंभावनः, यत्किञ्चित्प्रकारोपज्ञश्च। इमे विषया विवरणात्मका विचारात्मका विचारविवरणात्मका वा भवि-तुमर्हन्ति। (क) विवरणात्मका विषयाः प्राधान्यतस्तत्त्वप्रधानाः। एतेष्वज्ञातवस्तूद्धारः, अज्ञाततत्त्वस्य च वस्तुस्थित्या यथास्थाने नियोजना। तथ्यप्रधानानुसंधाने त्रुटिपूर्णतथ्यदशा-संशोधनमप्येकं कार्यम्। (ख) विचारात्मकनिबन्धेषु तथ्यानां व्याख्यानम्, विचारदिशि नवीनकोणोपस्थानम्, आहोस्विद् विहितविचारप्रगतावग्रेतनविचारकोट्युद्घाटनम्।

अद्यत्वेऽनुसंधीयमानविषयेषु नैतासां दृष्टीनां सुस्पष्टीकरणं लभ्यते। विषया बद्धप्रणा-लीमन्तरैव निर्धार्यन्ते। विषयनिर्वाचनदृष्ट्या विश्वविद्यालयानां मिथः सहयोगः परमापेक्षणीयः। विश्वविद्यालयस्य समीपेऽन्येषु विश्वविद्यालयेष्वनुसंधीयमानविषयाणां सूची भवेत्। विषय-निर्वाचनं विभागसाहाय्येन भवेत्। विद्यार्थी तदर्थं न स्वतन्त्रीक्रियेत।

सामग्रीसंग्रहः—शीर्षण्यस्थानीयात् सामग्रीसंग्रहात् पूर्वं तदुपलब्धिः क्वेति ज्ञानं परमावश्यकम्। यद्यपि व्याकरणात्मकानुसंधाने व्याकरणात्मकसामग्रीक्षेत्रमेव महत्त्वाधायकम्, तथापि प्रयोगाद्युपलब्धये साहित्यादीनामपि घनिष्ठः संबन्धः। एवमेव यद्यपि साहित्यिकानुसंधाने साहित्यिकसामग्रीक्षेत्रमेव महत्त्वकरम्, तथापि साहित्यिक्याऽभिव्यक्त्या सह जीवनस्य परिस्थितीनां च घनिष्ठः संबन्ध इत्यन्यक्षेत्रीयाणि वस्तून्यपि भृशमुपयोगीनि। अनया दृशा सामग्रीसंकलनीयक्षेत्रमनिवार्योपयोगिरूपे क्षेत्रद्वये विभज्य, उभयत एव सामग्री संग्राह्या भविष्यति। याथातथ्येन सामग्र्युपलब्धावेवानुसंधानस्य पूर्णतां साफल्यं च शक्यते स्वीकर्तुम्।

सामग्रीसंकलनदृशा तद्विषयिकायाः समग्रसामग्र्या एकत्रीभावः नितान्तम् आवश्यकः। सामग्रीसंकलनक्षेत्रस्य द्वैविध्यं शक्यते भवितुम्—१. साधारणम्, २. विशिष्टं चेति। अन्यविधया दृशा शक्यते विभाजयितुम् सामग्रीसंकलनक्षेत्रम्—

संकलनक्षेत्रम्—१. हस्तलिखितसाहित्यम्, २. प्रकाशितसाहित्यम्, ३. मौखिकं साहित्यं चेति। एतेषु प्रकाशितं साहित्यं सामान्यम्, प्राचुर्यात्। हस्तलिखितं मौखिकं च साहित्यं विशिष्टम्, अल्पत्वात्। एतेषु त्रिविधेषु क्षेत्रेषु सामग्रीसंग्रहप्रणाली नैकसमाना। आत्मनः क्षेत्रात् सम्यक्त्वेन सामग्रीम् उपलब्धुं शक्नुयाद् इत्येतदर्थम् अनुसंधित्सुना तत्परता पूर्णतया वर्तनीया। पूर्वोक्तेषु त्रिषु क्षेत्रेषु सामग्रीसंग्रहविधीनामपि सम्यग् ज्ञानम् आवश्यकं तस्य। यद्यपि प्रकाशितसाहित्यस्य प्रभूतग्रन्थानां प्रकाशनत्वात्, यत्र क्वापि पुस्तकालयेषु लेखकसंग्रहालयेषु वा तदधिगमः सुकरस्तथापि न तथा सौलभ्यं यथा प्रतीयते।

हस्तलेखगवेषणा तदेकत्रीकरणं च योग्यतावैशेष्यमपेक्षते। मौखिकसाहित्यसंग्रहः खलु योग्यतावैशेष्यतरमपेक्षते। एतदर्थं वैज्ञानिकसाधनानां सौकर्यं तदुपयोगश्च परमावश्यकः।

प्रबन्धयोजना—सति विषये निर्वाचिते समुचिता प्रबन्धयोजना प्रस्तूयेत। इयं योजना प्रतिभाजुषां विदुषां परामर्शेन घट्येत। अनयैव योजनया सह तद्विषयकोपयुक्तपुस्तकानां यात्रोपयुक्तस्थानानां दिग्दर्शकयोग्यविदुषां च सूचीप्रस्तुतिर्निकामं हितावहा।

प्रबन्धविषयाः—अनुसंधानप्रबन्धविषया भाषा-साहित्य-पुराणेतिहास-ज्योतिष-वेदविद्या-कृषि-स्थापत्य-व्यायाम-न्याय-वेदान्त-योग-मीमांसा-आगम-तन्त्र-व्याकरण-संबद्धा भवितुमर्हन्ति। तत्रापि वैदिकी भाषा, वैदिकभाषायां संस्कृतभाषायां च वृत्तयः (कृत्-तद्धित-समासैकशेष-सनाद्यन्त-धातुरूपाः), व्याकरणे नव्यन्यायप्रवेशसमीक्षा, व्याकरणस्य प्रत्यङ्गम् (कारकाणि, अव्ययानि,

धातवः, धात्वर्थाः, परस्मैपदम्, आत्मनेपदम्, सेडनिटो धातवः, संज्ञाः, कृत्तद्धिताः, लकाराः, अनुबन्धानां तुलना, लिङ्गानुशासनम्, गणपाठप्रयोगविवेचना, स्फोटसिद्धिः, व्याकरणस्य दर्शनत्वम्, पाणिनीयसूत्रार्थविमर्शः, आभ्यन्तरबाह्यप्रयत्नौ, अयोगवाहाः, भाषाविज्ञानदृशा सन्धिविवेचना, भाषाविज्ञानदृशा पद -(सुप्तिङन्त)- विवेचना; परिभाषाविवेचना, अपत्यप्रत्ययानां विमर्शः, निपातानां विचारः, मूर्द्धन्यवर्णविचारः, स्वरवर्णविमर्शः, कण्ठ्यवर्णविवेकः, तालव्यवर्णपरीक्षा, दन्त्यवर्णसमीक्षा, ओष्ठ्यवर्णविवेचना, आदेशसमीक्षा, पूर्वत्रासिद्धम्, अधिकारविमर्शः, ( सप्तविधानामेव सूत्राणां विचारः ), निरुक्तेन प्रातिशाख्यैश्च सह व्याकरणस्य तुलनात्मकम् अध्ययनम्, स्वरसमीक्षा, काव्येषु व्याकरणम् इत्यादयो व्याकरणविषया एवमन्येऽपि समुद्भावनीयाः ।

शब्देषु संस्कृतभाषायामद्यत्वे संस्कृतभाषानिबद्धं कार्यं नगण्यं स्वोपज्ञम् । इह दिशि विशिष्टग्रन्थेषु भाषाशास्त्रीयमध्ययनं प्रस्तोतुं शक्यते । यथा—ऋग्वेदस्य, यजुर्वेदस्य, सामवेदस्य, अथर्ववेदस्य, ब्राह्मणानाम्, आरण्यकानाम्, उपनिषदाम्, सूत्राणाम्, तन्त्राणाम्, बौद्धसंस्कृतस्य, जैनसंस्कृतस्य, मनुस्मृतेः, मृच्छकटिकायाः, भासनाटकचक्रस्य, नैषधस्य, कालिदासकाव्यानाम्, भवभूतिनाटकानाम्, कालिदासनाटकानाम्, बाणभट्टगद्यस्य, वाल्मीकीयरामायणस्य, महाभारतेत्यादिग्रन्थानां भाषाशास्त्रीयमध्ययनं प्रकामम् उपयोगि स्यात् पुराणादिभिः सह ।

निर्दिष्टेषु विषयेषु तुलनात्मकम् ऐतिहासिकम् आलोचनात्मकमेकैकं संभूय वा प्रकाराः शक्यन्ते समाश्रयितुम् । एतादृग्भाषाध्ययनं प्रति विद्यार्थिनां विदुषां च प्रवृत्तिर्न्यूनतमेति तदर्थं विद्यार्थिनः प्रोत्साहनीयाः ।

साहित्यम्—द्वैविध्यं खलु साहित्यस्य १. वैदिकम्, २. लौकिकं चेति वैदिकग्रन्थेषु लौकिकसंस्कृतग्रन्थेषु च साहित्यिकम् अध्ययनं निकामम् उपयोगि स्यात् । इह हि शैलीदृशा अलङ्कारादिविविधाभिर्दृग्भिरनुसंधानकार्यं भवितुमर्हति । हस्तलेखगवेषणासूचनाभिरप्रकाशितरचनानां कवीनां महाकवीनां वा परिज्ञानं लभ्यते । एतादृशाः कवयोऽनुसंधानविषयीकर्तव्याः । वाल्मीकिभासकालिदासादीनां संबन्धे सर्वाभिर्दृष्टिभिर्विचारेण भाव्यम् । प्रतिकवि विशिष्टाध्ययनं करणीयतामर्हति । कवीनां विशेषविषयेषु प्रवृत्तिषु वैतावच्चिरं न्यूनतमं कार्यं जातमिति तत्राप्यवकाशस्तदनुष्ठानार्थम् । जीवनसंपर्की साहित्यांशः क्वानुसंधानविषयीकृतः ? तत्राप्यनुसन्धानं

महते लाभाय कल्पते। अद्यापि विचारकोटेर्याथार्थ्येन तत्र परीक्षणं न जातम्, न च स्वोपज्ञताप्रयास एव।

कस्यचन ग्रन्थस्य वैज्ञानिकं संशोधनपूर्वकं सम्पादनमपि महत्त्वाधायको विषयः स्वीकर्तव्यः। अस्यां दिशि न्यूनतमा लघिष्ठाश्चोद्योगाः समजायन्त।

## शोधानां केचिदभावाः

१. (क) अनुसंधित्सूनां वैज्ञानिकेषु शोधविधिष्वनभिज्ञता।

(ख) प्रबन्धप्रस्तावविधावप्यनभिज्ञता तेषाम्।

(ग) विषयस्य समग्रं रूपं न प्रस्तूयते, न च प्रतिकथनं प्रामाणिकतैव निर्विवादा।

(घ) शोधानां न विश्वजनीनसम्पर्कः।

(ङ) मिथो विश्वविद्यालयैश्च न सम्पर्कः।

एतासां समग्रन्यूनतानामपनुत्त्यै विश्वविद्यालयीयत्रैमासिकपत्रिकायाम् अनुसंधानीयानां वैज्ञानिकसिद्धान्तानां चर्चा भवेत्, विश्वजनीनाया अनुसन्धानसमुन्नतेर्विवरणं भवेत्; स्वीकृतप्रबन्धानां संक्षेपा भवेयुः, ऊरीकृतयोजनानां स्वरूपपरिचयस्य प्रकाशनं भवेत्, प्रेष्यमाणानां प्रबन्धानां कतिचिदध्यायाः पत्रिकाविद्वन्मण्डलेन संशोध्य प्रकाशमानीयेरन् अनुसंधित्सुपरामर्शपुरस्सरम्।

२. भारतीयविश्वविद्यालयानां संस्कृताध्यक्षाणां समितेः परामर्शेन तावदुच्चकोटिकस्यालोचनामण्डलस्य स्थापना क्रियेत। इदमालोचनामण्डलं स्वीकृतप्रबन्धं सावधानं प्रेक्ष्य, तत्र विद्यमाननैयून्यविषये व्यक्तिगतं गोपनीयं च निर्देशनं विभागाध्यक्षं प्रहिणुयात्, येन भविष्यत्प्रबन्धेषु न तादृशानि नैयून्यानि संपद्येरन्निति। अमेरिकादिदेशेषु सौविध्यमेतत्। तादृश्यां पत्रिकायां निबन्धानां (प्रायशः शोधाध्यायानां) प्रकाशनं निबन्धप्रामाणिकतायाः कृते प्रमाणपत्रसन्निभम्। असंतुष्टा अपि संपादकास्ते भविष्यति 'तथाविधं प्रमादं न कुर्यादनुसंधित्सुरिति' परिश्रमपूर्वकं प्रबन्धं संशोध्य तदनुरूपतायाः कृते प्रयतन्ते, प्रबन्धानुरूपं च कृत्वा परावर्तयन्ति।

३. प्रथमो वर्षः खल्वनुसंधित्सूनां परीक्षणाय निश्चीयेत। सौविध्यप्रदानपूर्वकम् अनुसन्धानार्थिनः प्रतिविभागं निकामं प्रवेशनीया निर्बाधम्। एष्वनुसन्धानार्थिषु याथार्थ्येन अनुसन्धित्सुत्वलक्षणप्रतिभासम्पन्ना अग्रीयविषयप्रदानपूर्वकं नियोज्येरन्।

अनुसंधानकार्यसंपत्त्यै योग्यतात्रयी नूनं परीक्षणीया—

(क) अनुसंधित्सुः—प्रतिभाशाली, सुधीरः, कर्मठो जिज्ञासुश्च भवेत् ।

(ख) संस्था—सामग्रीप्रचुरा, सामग्रीप्रबन्धदक्षा, अनुसंधानोचितवातावरणोपेता च ।

(ग) अधीक्षकः—विषयाभिज्ञः, विधिवेत्ता सहृदयश्च भवेदिति ।

प्रबन्धविषयेऽपि तथ्यद्वयी ध्यानीया—

(क) प्रतिकथनं प्रमाणपुष्टिः ।

(ख) स्वपरिसीमायां विषयस्य परिपूर्णतेति ।

## ऐतिहासिकमनुसंधानम्

पुरातनानां ग्रन्थानां यथाक्रमम् अनुशीलनमपेक्ष्यत इह विषये । १. ऋगादिवेदाः सब्राह्मणारण्यकाः सोपनिषदश्च, २. सूत्रग्रन्थाः, ३. वाल्मीकीयं रामायणम्, ४. महाभारतम्, ५. बौद्धसंस्कृतम्, स्मृतिपुराणसाहित्यम्, ६. नाटकादिसाहित्यम्, ७. पालिभाषा, ८. शिलादिलेखाः, ९. प्राकृतभाषा, १०. अपभ्रंशभाषा, ११. प्रादेशिक्यो भाषाश्च ।

व्याकरणसाहित्येतिहासाद्यनुसंधाने खल्वेषा श्रृङ्खला पौर्वापर्येण समाश्रयणीया । अलङ्काराणां छन्दसां तदैतिह्यस्य वानुसंधानप्रसङ्गे श्रृङ्खलेयमनिवार्यतयावलम्बनीया । वैदिकग्रन्थानां कोशा निर्मिता इत्यक्षरशः परायणश्रमोऽनपेक्षितः । वाल्मीकीयरामायणस्य महाभारतस्य च नास्ति कश्चन शब्दानुक्रमकोश इत्यृते पारायणान्नान्यः पन्थाः । बौद्धसंस्कृतग्रन्थानामपि कोशो नास्ति, संकरसंस्कृतकोशः ( Hybrid ) अवश्यं लभ्यते । संस्कृतनाटकादिसाहित्यस्यापि नास्ति कोऽपि कोशः । संस्कृतभाषोद्धरणकोशेषु बाथलिङ्क-राथनिर्मितः संस्कृतवर्तेरबूख् इति कोशो रत्नम् । पालिभाषायाः कोशः ( P. T. S. Pali-English Dictionary ) सुलभः, प्राकृतभाषायाः 'पाइअसद्दमहण्णवो' इत्यपि तथा । अपभ्रंशभाषायाः कोऽपि कोशो नोपलभ्यत इति तद्भाषामयग्रन्थानां परिशिष्टलग्ना शब्दसूची द्रष्टव्या ( यदि तत्र स्यात् ) । प्रादेशिकीनां भाषाणां सन्ति केचन कोशा निर्मिताः । तत्र कश्मीरीयभाषायाः ( ए डिक्शनरी ऑव दि कश्मीरी लैंग्वेज ) कोशो जी. ए. ग्रियर्सनसंपादितः; नेपालीयभाषायाः ( ए कम्परेटिव एण्ड ऐटिमॉलॅजिकल् डिक्शनरी ऑव् दि नेपाली लैंग्वेज ) आर्० एल्० टर्नरसंपादितः कोशः; राजस्थानीयभाषायाः 'राजस्थानी सबद कोस' इत्याख्यो लालससंपादितः कोशः । मराठीभाषायाः कोशद्वयम्—१. 'ए डिक्शनरी, मराठी एण्ड इँग्लिश्' मोलेस्वर्थसंपादितः ( मुम्बापुर्याम्, १८५७ खीस्ताब्दे ), २. 'मराठी व्युत्पत्तिकोश' इत्याख्यश्च कृष्णाजीपाण्डुरङ्गकुलकर्णीसंपादितः

( मुम्बापुर्याम्, १९४६ खीस्ताब्दे )। सिन्धीभाषायाः कोशः कैप्टैन-गेअर्ग-स्टैकसंपादितः—'ए डिक्शनरी, सिन्धी इँग्लिश लैंग्वेज' इत्याख्यो विद्यते। भाईमायासिंहसंपादितः 'पञ्जाबी डिक्शनरी' इति द्रष्टव्यः। द्राविडभाषाणां व्युत्पत्त्यात्मकः कोशः टी० बरो-एम्० बी० एँमनो-द्वारा संपादितः प्रशंसार्हः 'ए द्रविडियन् ऐटिमॉलॉजिकल् डिक्शनरी' इत्याख्यः[१]। भारतीय-भाषाणां तुलनात्मकः कोशः संप्रत्येव प्राकाश्यमानीतः 'ए कंपरेटिव डिक्शनरी ऑव इण्डो-आर्यन् लैंग्वेजेस्' इति टर्नरसंपादितः।

भाषात्मकानुसंधानार्थं भारोपीयभाषाणां भारेनीयभाषाणां च कोशान् विना शृङ्खला-भङ्ग इति तत्रार्थे एलॉयस्वाल्देमहाशयस्य 'फेर्ग्लाइशेन्देस् वर्तरबूख् देर इन्दो-गार्मनिशेन् स्प्राखेन्' इति कोशो जूलियसपोर्कर्नीसंपादितः, जूलियसपोकर्नीरचितश्च 'ऐतिमोलोगिशेस् इन्दोगर्मनिशेस् वर्तरबूख्' इति कोशः। पुरातनेरानियन्भाषायाः 'अल्तिरानिशेस् वर्तरबूख्' इति कोशः क्रिश्चियन्-बार्तोलोमे-विरचितोऽवश्यं विलोकनीयः। पर्सियन्भाषायाः स्टाइनगासविरचितः 'पर्सियन इँग्लिश् डिक्शनरी' इत्युपलभ्यः कोशः। सीमावर्तिनीनामपगान-पश्तोप्रभृतीनां भाषाणां कोशाः नितान्तमपेक्षणीयाः। तत्र 'ए डिक्शनरी ऑव् दि पश्तो लैंग्वेज्' इति कोशः पश्तोभाषायाः। अस्मिन् प्रसङ्गे जिप्सीभाषाऽपरिहार्या। तस्या न कोऽपि कोशो मद्दृष्टिपथमुपेतः। जर्नल ऑव् अमेरिकन ओरिएण्टल सोसाइटी ( J. A. O. S. ) इति पत्रिकायाः सप्तमे खण्डे जिप्सीभाषायाः शब्दसूची यद्यपि न पर्याप्ता, तथापि विशिष्टा-ध्ययने नूनं साहाय्यकमर्पयिष्यति। जिप्सीभाषायाः 'जिप्सी स्टडीज़' ( टेल्स् इन् दि बाल्टिक् डायलेक्ट् ऑव् रोमानी ) इत्यप्येको ग्रन्थः। एतस्य परिशिष्टे शब्दसूची निकामम् उपयोगिनी।

भाषासंबन्धिन्यैतिहासिकेऽध्ययने जर्मनभाषाऽनिवार्येति तदध्ययनं नोपेक्षणीयम्। यद्यपि फ्रेंचभाषाप्यध्येया तदर्थम्, तथापि जर्मनभाषया केवलयापि सुकरो निर्वाह इति जर्मन-भाषाऽनिवार्यतापदमारोहति। व्याकरणानुसंधाने तु पूर्वोक्तानां भाषाणां व्याकरणग्रन्था अपि दर्शनीयाः।

## इतिहासो निर्वचनं च

ऐतिह्येन संबध्नाति निर्वचनम्। प्रयोगनिदर्शनम्, संबद्धभाषायाः शब्दैः सह तुलना,

---

१. द्र० सन्तालभाषायाः पी० ए० बोड्डिङ्गरचितः 'ए सन्ताल डिक्शनरी' इत्याख्यः, मुण्डारीभाषायाश्च मणीन्द्रभूषणभादुरिरचितः 'ए मुण्डारी इङ्गलिश डिक्शनरी' इति च।

गुणदोषनिरूपणं च शब्देतिहासनिकषः। शब्दैतिह्यप्राप्त्यभावे काल्पनिकनिरुक्त्या संतुष्टिपरिपाटी दृश्यतेतमाम्—'मह्यां रौति मयूरः' इत्यादिः। अद्यत्वे भाषाविज्ञानयुगेऽपि भारतीया वैयाकरणाः प्राधान्येन समाश्रयन्ति परिपाटीमेनाम्। एवञ्जातीयकानि निर्वचनानि सन्त्यविचारितरमणीयानि बालक्रीडामात्राणि च। नैमिर्जिज्ञासूनां जिज्ञासा शाम्यति, न चानुसंधानकार्यं भजते गतिमत्ताम्। जीवरसायनविचक्षणस्य नोबेलपुरस्कारविजेतुः श्रीटिसेलियसस्य (स्वीडनाभिजनस्य) मतानुसारेण—'सदोषानुसंधानापेक्षया तदकरणं श्रेय इति बाढं स्मरणीयम्। अन्यच्च, अनुसंधानकार्यं नापेक्ष्यते क्षेपिष्ठता।' अनुमानानि न तावच्चिरं सत्यरूपेण स्वीक्रियेरन्, यावच्चिरं तथ्यानां संपुष्टिर्न भवेत्। अनुमानैः सूत्रगवेषणा न दोषाय कल्पते, तथापि तेषां प्राधान्येनाङ्गीकारो हेयः साधनस्य साध्यत्वेनाङ्गीकारवत्।

भारतीयवैयाकरणैर्ज्ञातानि भारतीयभाषाणां ध्वनिपरिवर्तनानि। यद्यपि पाणिनीयव्याकरणस्य सुमननं भारतीयभाषाणां विकासधाराविश्लेषणे प्रकामं सहायकम्, तथापि भारतीयव्याकरणस्याधारेण यूरोपियन्-ईरानियन्प्रभृतीनां भाषाणां विश्लेषणमविचारिता चेष्टा। व्याकरणं शब्दसिद्ध्युपायः, नेतिहासः।

'दॉयच्' इत्यस्य 'डच्' इत्यस्य वा दैत्य-शब्दात्, 'सुलतान' इत्यस्य च 'सुरत्राण'–शब्दाद् व्युत्पादनमनैतिहासिकम्। 'यूनिवर्सिटी' इत्यस्य 'योनिवरस्थति'-इत्यस्माच्छब्दात् 'बाइसिकल' इत्यस्य च 'वायुयकल'–शब्दाद् व्युत्पादने कल्पनाकौशलाद् दिष्टदुरुपयोगाच्चातिरिक्तं नास्ति किमप्यन्यत्। 'बाइसिकल'-शब्दस्य 'बाइ'-शब्दः संस्कृतभाषागत-'द्वि'-शब्दबोधक इति तदपेक्षया 'द्विचक्रिका'-शब्दो युक्तियुक्ततरः।

संस्कृतेतरभाषागतशब्दानां संस्कृतभाषायामनुवादो नास्ति काचन नूतनोपलब्धिः। द्राविडभाषागतस्य पुंवानरार्थकस्य 'आण्मन्ति' इति शब्दस्यानुवादो द्रष्टव्य ऋग्वेदीये वृषाकपिशब्दे। द्राविडभाषासु 'आण्' इत्यस्य 'आल्' इत्यस्य वार्थो भवति पुरुष इति; 'मन्ति' इत्यस्य च वानर इति। एष एव 'आल्' इति शब्दस्तत्र स्त्रीलिङ्गे 'आली' इति रूपेण व्यवह्रियते योषिदर्थकः[1]। तत्रत्यः स शब्दः संस्कृतभाषायां सखीवाचकत्वेन गृहीतः प्रयुज्यते। मूलतोऽयं संस्कृतभाषेतरः। वाल्मीकीयरामायणादावेष आण्मन्तिशब्दो हकारागमेन सह 'हनूमन्त्+औ, जसादयः'—रूपेण समुपलभ्यते। द्राविडशब्दानां परिचयाय द्रष्टव्यः काल्डवेलमहोदयलिखितः 'ए कम्परेटिव ग्रामर ऑव् दि द्रविडियन्' (लन्दन, १८५६) इति ग्रन्थः।

---

१, द्र० भूमिका 'तद्धितान्ताः केचन शब्दाः' इति पुस्तकस्य।

वैदेशिकाः केचन शब्दा ईषत्परिवर्तनपूर्वकं तदवस्था एव संस्कृतभाषायां गृहीताः। ग्रीकभाषायाः 'केन्त्रोन्' [ लैटिन—केन्त्रुम् ] इति शब्दः संस्कृतभाषायां 'केन्द्रम्' इत्यनेन रूपेण परिगृहीतः, 'दियोमित्रियोस्' इत्ययं च 'जायामित्र > जामित्र' इत्येवं रीत्याङ्गीकृतः। वराहमिहिरकृते बृहज्जातके बहवः शब्दा दृश्यन्त एतादृशाः[१]। महाभारतोद्धृतः 'सुरुङ्गा' इति शब्दः संस्कृतेतरः। ग्रीकभाषायाः सुरिंग्क्स्'—शब्दप्रतिरूपः। तुलनीयौ 'सिरिंक्स्' इति 'सिरिंज्' इति चाङ्गल्भाषाशब्दौ। एतादृशानां शब्दानां निर्वचनस्य संस्कृतभाषायां मार्गणं शशशृङ्गायितम्। येन केनाप्युपायेन व्युत्पत्तिर्नितरामनैतिहासिकी निष्फलाऽप्रामाणिकी च। संस्कृतभाषातो विश्वभाषाणामुद्गमस्य भ्रान्तधारणा वैयाकरणान् विवशयति येन केनाप्युपायेन निर्वचनप्रतिपत्तये। शब्दानामितिहासात्मकविश्लेषणार्थं गुणदोषविवेचनार्थं चोपयोगिनी भविता विशिष्टा शिक्षा। यथा पाणिनीये व्याकरणे द्वादशभिर्वर्षैराप्यते पाटवम्, तथैव शब्दानाम् ऐतिहासिकनिर्णयस्यार्थमपि विशिष्टशिक्षायोजनाऽपेक्ष्यते। शिक्षैषा प्रयत्नश्रमावपेक्षते, न तु कण्ठस्थीक्रियाम्। प्रयत्नश्रमाभ्यां प्राग् उचितनिर्देशकस्य सांनिध्यमनिवार्यतया वाञ्छनीयम्।

यद्यपि ग्रीकभाषायाः 'सेमिदालिस्' इति शब्दाद् 'लिस्' इत्यस्य लोपं विधाय संक्षिप्तस्य 'सेमिदा' इति शब्दस्याधारेण संस्कृतभाषायां समिता ( = मैदा—हि० ) इति शब्दः प्रकल्पितः, तथापि भारतीया वैयाकरणास्तदर्थप्रसङ्गे 'सम्यक् + इता = प्राप्ता' इति निर्वचनं दर्शयन्त्येव। ग्रीकभाषातः संस्कृतभाषायां गृहीतानामन्येषामपि शब्दानां संबन्ध एवञ्जवातीयैव निर्वचनधारणा पदं करोति।

शब्देतिहासपरीक्षणार्थं प्रश्नोऽयं कर्त्तव्यो भवति—"शब्दोऽयम् अमुकवाङ्मये कदारभ्य प्रयुक्तः ?" इति। तद्वाच्यानां पदार्थानां च व्यवहारः कदारभ्य जात इति। सहस्रद्वयवर्षानन्तरं संस्कृतभाषायां प्रयुक्तं 'वायुशकलम्' इति शब्दं दृष्ट्वाऽनुसंधाता लेखिष्यति—"आः ! वायुशकलशब्दः संस्कृतभाषायां प्रयुक्तचर इति ज्ञायते यद् द्विचक्रिकाया निर्माणं सर्वतः प्रथमं भारते वर्षे संजातम्" इति। द्विचक्रिकायाः समग्राणामवयवानां नामानि संस्कृतभाषायां विचेयानीति तथ्यनिर्धारणार्थं तत्रापेक्षिष्यते। तत्र च संस्कृतभाषायां द्विचक्रिकायाः कस्याप्यवयवस्यानुपलब्धौ सत्याम्, अनुसंधायक इतरभाषासु गवेषणापूर्वकं ज्ञास्यति तत्स्रोतः। समिता-( मैदा )-

---

१. क्रिय-ताबुरु-जितुम-कुलीर-लेय-पाथोन-जूक-कौर्प्याख्याः।
तौक्षिक आकोकेरो हृद्रोगश्चान्त्यमं चेत्थम् ॥ १, ८।
तत्रैव पणफर-आपोक्लिम-मेषूरण-हेलि-मणित्थ-शब्दा अपि द्र०—१,१८;२,२;७,१।

निर्मितानां सर्वेषां पदार्थानां नामानि गवेषणीयानि । नोपलप्स्यते प्रयोगभूमिस्तदीया तत्र । भावप्रकाशे 'समिता' इति शब्दस्तत्पदार्थनिर्मितानां च केषाञ्चन खाद्यानामभिधेयान्यपि समधिगंस्यन्ते'। समिता गोधूमप्रभवा। दशमशताब्दभवेन यादवप्रकाशेन समुद्घोषि "गोधूमस्तु म्लेच्छभोज्यः" इति । भावप्रकाशकारेण भावमिश्रेणापि कृता तत्पुष्टिः— "महागोधूम इत्याख्यः पश्चाद् देशात् समागतः" इति ।

तैत्तिरीयादिसंहिता-शतपथब्राह्मणादिग्रन्थेषु गोधूमशब्दस्योपलब्धौ सत्यामपि कुतस्तस्य पश्चिमदेशात् समागमनोल्लेखः ? भवद्भिरनुसंधायकैः प्राचीनभारते गोधूमोपयोगः, गोधूम-निर्मितपदार्थानाम्, तन्निर्माणोपकरणानां च गवेषणा विधेया संस्कृतवाङ्मये । खीस्ताब्दीय-तृतीयशताब्दतः प्राक् संस्कृतभाषाग्रन्थेषु गोधूमपदार्थानाम्, तन्निर्माणोपकरणानां च नोपलभ्यते स्रोतः । कौटलीयार्थशास्त्रे मध्यमभोजनस्य 'आर्यभक्तम्' इति नामधेयम् । तत्रौदनसूपमात्रं भोजनम् । यद्यप्यस्ति तत्र गोधूमोल्लेखः, तथापि नास्ति तस्य भक्ष्यत्वेन विनियोगः । 'गोधूमास्तु क्षुण्णाः' इति तत्र यववत् क्षुण्णत्वं प्रत्यपादि तेषाम् । यज्ञेषु गोधूमनिर्मिता नोपयुज्यन्ते केचि-दपि पदार्थाः । परवर्तिनि काले गोधूमानां प्रयोगो यूपचषाले प्रक्रान्तः । परम्परेयं दाक्षिणात्या । तत्र गोधूमचूर्णदीपको व्यवह्रियते । इदानीं तावदन्यत्रापि दृश्यते तत्प्रचारः । तैत्तिरीयसंहितायां तु 'अनाहुतिर्वै जर्तिला गवीधुकाश्च' इत्यभिधाय यज्ञे निषिद्ध आरण्योऽपि गोधूमः, का कथा गोधूमस्यास्य । इमाः समग्राः शब्दसंक्रान्तयः प्रकाशयन्ति खल्वस्मदीयान् सांस्कृतिकान् संबन्धान् । भारतीयैरुपयोगीनि वस्तूनि तथात्मसात्कृतानि यत् तानि वैदेशिकत्वेन संस्कृत-भाषेतरत्वेन वा स्वीकर्तुं न पार्यन्ते । एवं कुर्वाणैश्च महत् कष्टमनुभूयते । उपयोगिनां वस्तूनां कुतश्चिदप्यादानं भारतीयसंस्कृतेः प्रकृतिः ।

महाभाष्यकारेण भगवता पतञ्जलिना पदे पदे 'ओदन'—शब्दः प्रयुक्तः । तत्रैकत्र पचतीत्यस्यार्थो दर्शितः—'विक्लित्तिः' इति । रोटिकेत्यादेर्न पारयते सम्बन्धो भवितुं पचतिना । रोटीति शब्दो देशज-रोट्टप्रभवः । तदीयो मौलिकोऽर्थस्तत्र विराजते तण्डुलचूर्णमिति । गुर्जरभाषायामयं रोट्टशब्दो लोटःरूपेण दृश्यते ।

सप्तदशशताब्द्याः प्रथमार्द्धे हालैण्डदेशस्य वाणिजेन पैलसर्टमहोदयेन लिखितम्—"यथा तुर्कादयो गोधूमरोटिकया सह मांसादिकं भुञ्जते, न तथा भारतीया अश्नन्ति । ते तु कणैः सह कणानदन्ति (गल्लह-रा बा-गल्लह मी-खुर्दन्द ) । ओदनः, द्विदलम्, मनाग् घृतं चेति भारती-यानां भोजनम् ।"

---

१. विशेषज्ञानार्थं द्र०—"तद्धितान्ताः केचन शब्दाः" इत्यस्य भूमिका ।

इतिहासस्यास्य प्राप्तौ सत्यामपि 'पुरोडाश' इति शब्दाद् 'रोटिका'–शब्दस्य कल्पना नितरामसङ्गता । तादृशेन क्रमेण तु 'पूड़ा' 'पूड़ी' इत्यादिशब्दानां कल्पनापि 'पुरोडा'-शब्दाद् 'रो' इत्यस्य 'श' इत्यस्य च लोपे कृते सति शक्यते विधातुम् अवशिष्टस्य 'पुडा' इत्यस्याधारेण । उत्कलभाषायां दृश्यते 'पुरोड' इति शब्दः । एतस्यापि पुरोडशब्दस्य नास्ति संबन्धः पुरोडाश-शब्देन । स तु पूर्पुटशब्दाद् ज्ञेयो व्युत्पन्नः ।

भावप्रकाशे भावमिश्रेण पुरोडाशशब्दप्रयोगं विहाय 'रोटिका'–शब्दः प्रयुक्तः । माषपिष्टिकापूर्णगर्भाया गोधूमचूर्णतो रचिताया रोटिकाया नामधेयं तेन 'वेढमिका' इति प्रोक्तम् । प्राकृतभाषायाः प्रश्नव्याकरणसूत्रे ( २, ५—पत्र० १४८ ), अभिधानराजेन्द्रे चोल्लिखितः 'वेढिम' ( वेष्टिम ) इति शब्दः । वेष्टनं कृत्वा निर्मितं खाद्यमिति तदर्थः ।

संस्कृतभाषायां संस्कृतेतरशब्दानामस्ति बृहती सूची । क्वचित् तु संस्कृतभाषातः पालिभाषायां गृहीतः शब्दः पुना रूपान्तरीभूय ततः संस्कृतभाषायां प्रयुक्तो दृश्यते—'चतुरः > चटुलः' ( त्रासातिमात्रचटुलैः—रघु०६,५८ ) । संस्कृतभाषाया राष्ट्रशब्दः प्राकृतभाषायां क्वचिद् रट्ठ', क्वचिच्च 'लाट' इति जातः । प्राकृतभाषायाः स एव लाटशब्दः संस्कृतभाषामुपेतः । स वस्तुतः 'सुराष्ट्र'-शब्दस्य संक्षेपः । सुराष्ट्रस्य सीमा पश्चिमराजस्थानात् प्रभृति सिन्धुं यावत् । सिन्धुप्रदेशस्योपभाषा 'लड़िकाना', 'लाड़', आहोस्विद् 'लार' इति । पर्यन्ते राजस्थानस्य पश्चिमं भागमारभ्य संपूर्णः सुराष्ट्रप्रदेशः 'गुर्जर' इति 'गुजराट' ( गुजरात ) इति वा जातः । पश्चिमे राजस्थाने स्थितस्य 'अर्बुद' इत्याख्यपर्वतस्य शिखरं 'गुरु'–नाम्ना प्रथितम् ( द्र० टाडलिखितं राजस्थानम् ) । तस्मिन् शिखरे दत्तात्रेयस्य पादुके विद्यमाने । एनमेव गुरुमारभ्य संपूर्णः सुराष्ट्रप्रदेशः 'गुरुसुराष्ट्र > गुर्जरात्र' इति संवृत्तः । मार्कण्डेयपुराणे तस्य 'गुरुस्वराः' इत्यनेन रूपेण सङ्केतमात्रम् । भाषाया ऐतिह्यानुसारेणापि सकारस्य जकारत्वेन परिणतिरनेकत्रोपलभ्यते । संस्कृतभाषायाः 'एधि' इति तादृशमेव निदर्शनम्—√अस् + धि > अज् + धि > अय् + धि > अइ + धि > एधि । अन्यान्यपि प्रस्तूयन्ते निदर्शनानि—न + √ सद् > नज्द् > नय्द् > नइ + द् > नेद् > नेदीयस्; पर्सियन्-भाषायां नज्द् (नजदीक) इति । एवमेव—अपि + √सद् > पिज्द् > √पीड् इति जातः ।

उक्तैतिह्यप्राप्त्यभावे विद्वांसो गुर्जरशब्दं खजरशब्दप्रभवं मन्यन्ते स्म । केचिच्च तं गोचरशब्देनापि सम्बध्नन्ति स्म । भाण्डारकरस्यैकस्मिन् लेखे गुर्जरं गोचरेण संबध्य पुनरसन्तोषो दर्शितः, खजरशब्देन च सह संबन्धाय प्रयासः समनुष्ठितः । एवं कृतेऽपि, नाभूत् तेषामसन्तोषोन्मूलनम्, गुर्जरशब्दे रेफागमस्यासमाधेयत्वात् ।

एवमेव जाटशब्दमूलमपि विवादास्पदम् । एतस्यैतिह्यानुसन्धानाय प्रयतनीयम् । निरुक्ते जाट्य—शब्दप्रयोगः[१] । देशीनाममालायां ( ३।४५ ) गुल्मलताप्रतानाद्यर्थको जाडीशब्दः । शब्दसाम्यमात्रेणैव नास्माभिस्तेषां परस्परसंबन्ध आश्रोतव्यः । सर्वे जाटा जटिला न भवन्तीति तेषां शिवजटाप्रभवत्वं निरस्तम् । जातीनां नामकरणे हेतवो भवन्ति देशाः, पर्वताः, नद्यो वेति; आहोस्वित् प्राक्तन्या जातेस्तच्छब्दस्वरूपं यद् विविधपरिवर्तनमास्वादयद् द्रागप्रत्यभिज्ञेयं भवतीति विदन्ति जातिविशेषज्ञाः । जाड्यसंबद्धं केचिदामनन्तीमं शब्दम् । जाटजातिः सिन्धुप्रदेशे पूर्वीयपञ्जाबप्रदेशे, राजस्थाने, उत्तरप्रदेशस्य च पश्चिमे भागे दृश्यते निवसन्ती । एते खल्वाभीरेभ्यो यादवेभ्यो वा न सन्ति भिन्ना इतीदमीयाः सकलाः प्रवृत्तीर्निरीक्ष्य विज्ञायते । यादवानां ह्यनेकाः श्रेणयः । श्रीकृष्णकालात् प्रभृतीमे दुर्दान्ता[२] उद्दण्डाश्च संवृत्ताः । ऋषय उद्विग्नाः समभूवन्नेषां व्यवहारेण । यादवशब्दस्यैकः प्रकारोऽस्माभिर्लभ्यते जादौ[3]-रूपेण; अपरस्तु—'जाट'-स्वरूपेण । ध्वनिपरिवर्तनानुसारेण दकारो डकारो भवति—'दर>डर' इति । डकारश्च टकारत्वं प्रतिपद्यते—अडी>अटी=जलप्रान्ते निवसन्ती काचन चटका (तुल० 'त्वमप्याडिर्भवस्वेति'—मार्कण्डेयपुराणे ६।१० ) इति; 'आडम्बर>अटम्बर' इति च । केचित्तु 'मैसागेताइ[४]' इत्यस्य 'गेताई'>'जैटाई>जाट' इत्यामनन्ति ।

समधिगतेष्वप्येतेषु समस्तेषु सूत्रेषु, अनुसन्धानमिदं तावच्चिरं प्रामाणिकं भवितुं नार्हति, यावच्चिरं जाटानां यदुवंशेन सार्धं संबन्धस्य प्रमाणैः पुष्टिर्न भवेत् । जाटस्य पुत्रः 'जटेटा' 'जटेटी', स्त्री 'जट्टी', शिशुश्च 'जट्टूड़ा', स स्वयं च 'जट्ट' इत्यभिधीयते । मद्रदेशेषु जट्ट (<जर्त)-प्रदेशस्य निवासिनां च चर्चा हेमचन्द्रेण स्वकीये प्राकृतव्याकरणे व्यधायि । वनस्परेण ( पौराणिकं नाम—विश्वस्फाणिः, विश्वस्फूर्जिर्वा ) ६०—१२० खीस्ताब्दे मगधमारभ्य

---

१. सन्त्यल्पप्रयोगाः कृतो ऽप्यैकपदिका यथा वृततिर्दमूना **जाट्य** आट्णारो जागरूको दर्विहोमीति —निरु० १.४.१४ जाट्यः=जटावान् ( निरुक्तविवृतिः ) ।

२. ( क ) 'जट्ट ते फट्ट वद्धे चंगे'—फट्ट=व्रणः ।

( ख ) 'जट्ट बूट जट्ट वहिड़, जट्ट वहिड़, वहड़ ।'

( ग ) 'जट्ट वाहद्, जट्ट वाध ।'

( घ ) 'जट्ट णा जाणे गुण करा, चणा ना जाणे वाह; उस्दा गुरू सोहागा, उस्दा गुरू शाह ।'

३. जायव—णायाधम्मकहासुत्त १, १६ ।

४. Yue-ti were **Getai**. The old sound of Yue he observes was **Get**, correspondent with the Greek form **Getai**.

—Ancient India described by Ptolemy, pages 266.

प्रयागान्तो विस्तारः कृतो निजस्य राज्यस्य। तेन विहारप्रदेशाद् मद्रका अपि समाहूता बुन्देलखण्डे। इमे मूलतः पंजाबप्रदेशीयाः[१]। महाभारतस्य शल्यपर्वणि चत्वारिंशेऽध्याये कर्णो मद्राधिपं शल्यं निर्भर्त्सयन् वर्णयामास तत्रत्यानां जनानां दुश्शीलताम्। दशमे श्लोके जर्तिकनामकानां वाहीकानां चरित्रं सुनिन्दितं प्राख्यापयत्[२]। पंजाबप्रदेशीयासु लोकोक्तिष्वपि सन्ति संदृब्धा एवंविधा भावाः[३]। स्थानस्य शब्दार्थसाम्यस्य चोभयत्राविकलं विद्यमानता। जिप्सीभाषायां 'जत्त' (फिर्दौसी), 'जोत्त' = अरबियादेशस्य सीरियादेशस्य च जिप्सीसंज्ञका जनाः। सिन्धीभाषायां कृषकस्य संज्ञा विद्यते—'जट्ट' इति। एवं तावद् इतिहासात्मिकया, तुलनात्मिकया, गुणदोषविवेचनात्मिकया च समीक्षया सत्यस्य परीक्षणम् अनुसन्धाननिकषः।

द्वयोर्भाषयोः शब्दस्य बाह्यं साम्यमेव पर्याप्तं भवतीत्येवं विचारपरा जना बाह्यसाम्याधारेण भिन्नमूलयोः शब्दयोरैक्यं निर्णयन्ति। कानिचन निदर्शनानीह प्रस्तूयन्ते। एतादृशानां मतेन 'डच्' इति 'दायच्' इति वा शब्दः संस्कृतभाषाया दैत्यशब्दप्रभवः; तैत्तिरीयशब्दस्य परिचयः 'तातार'-शब्दाधारेण भवति; कैस्पियनशब्दस्य कश्यपशब्दात्, चित्पावनस्य 'चिप्टे' इत्यस्य वा प्रभवः 'काप्ट' इत्यस्मात् 'जिप्ट' इत्यस्माद् वा। एतादृश्यो व्युत्पत्तयो विना कमपि साक्ष्याधारं प्रस्तूयन्ते तुलनात्मकभाषाशास्त्रीयनियमप्रतिकूलाः। उच्चजर्मनभाषागतस्य 'दायच्' इति शब्दस्य श् (च्) Sch इति प्रत्ययो विशेषणात्मकः संस्कृतभाषामभिसम्बध्नातीति ग्रिमनियम इह प्रवर्तते। जर्मनभाषाया दकारो गॉथिकभाषायास्थकारेण संस्कृतभाषायाश्च तकारेण तुल्यः। इत्थम्, जर्मन्—'द्राइ' = 'त्रि' इँग्लिश्–'थ्री' संस्कृतभाषायां च 'त्रि' इति; जर्मन्–'दस' = (das), इंग्लिश्–'दैट' (that), संस्कृतभाषायां च–'तद्' इति; जर्मन्–'दुर्श', (durch), इँग्लिश्–'थ्रू' (through), संस्कृतभाषायां च–'तिरस्' इति; जर्मन्–'दुर्स्त' (Durst), इँग्लिश्–'थर्स्ट' (thirst), संस्कृतभाषायां च 'तर्षः' इति। सामान्यतो जर्मनभाषायास्तकारः, इँग्लिशभाषाया दकारः, संस्कृतभाषायाश्च धकारः समानाः। उदाहरणतो

---

१. बुन्देलखण्ड की प्राचीनता, ४९ पृ०।

२. कार्येणात्यर्थगूढेन वाहीकेषूषितं मया।
तत एषां समाचारः संवासाद् विदितो मया ॥९॥
शाकलं नाम नगरमापगा नाम निम्नगा।
जर्तिका नाम वाहीकास्तेषां वृत्तं सुनिन्दितम् ॥१०॥

३. 'भोण रोही, मैण्ह लोही, तल्वार सरोही, रन्न जट्टी होर सभ खान दी चट्टी' = रोहीत्यभिधेया भूमिः, नीलनिभः कृष्णो महिषः, सरोहीत्यभिधेयः कृपाणो जर्तिकस्य (जट्टस्य) च स्त्रीत्येते सर्वे केवलमभ्यवहरन्ति।

जर्मन्–'मित्ते' ( Mitte ), इँग्लिश्–'मिड्' ( mid ), एँग्लो-सैक्सन्–'मिद्दे', संस्कृत-भाषायां च–'मध्यम्' इति; जर्मन्—'ताग्' ( Tag ), इँग्लिश्–'डे' ( day ) संस्कृतभाषायां च 'धक्'-सदृशः कोऽपि शब्दः[1]। निष्कर्षतः संस्कृतभाषागतस्य दैत्यशब्दस्य स्थाने जर्मन-भाषायां 'ताइध्'-सदृशेन केनचिच्छब्देन भवितव्यम्, न तु 'दायच्'-शब्देन।

'इण्डोयूरोपियन्-पूर्वजाः समानभाषाभाषिणः समभूवन्; विभक्तास्ते विभिन्नदेशानध्यवसन्' संस्कृतभाषाया यूरोपियन्-भाषाणां च सादृश्यस्यास्त्ययमाधारः। वेदानां सम्पादनात् कामं पूर्वमिदं जातम्। नास्ति दैत्यशब्दो वैदिकः।

भ्रान्तसादृश्यानां कानिचिदुदाहरणानि—किरमिज<सं० कृमिजः, वस्तुत इँग्लिश्–कनवस ( >किरमिच ); किमरिक<सं० कृमिकः, वस्तुत इँग्लिश्–कैंब्रिक्; कीस>सं० कीशः, वस्तुतः पर्सियन्—कीसा=उल्वः। ब्रह्मवैवर्तपुराणे 'विदाय' शब्दो, वस्तुतः 'विदाअ' इत्यरबिकशब्दप्रतिरूपः। 'कहवा' इत्यर्थकस्य काफीशब्देन पर्याप्तार्थकस्यारबिक-काफीशब्दस्य न कोऽपि संबन्धो बाह्यसादृश्यमतिरिच्य। गिरिजा(गृह)-स्य 'गिरिजा'-देव्या नास्ति कोऽपि संबन्धः। स तु पुर्तगालभाषागतस्य 'इग्रिजिया'-शब्दस्यावशेषः। पर्सियनभाषागतात् 'फीनस'–शब्दाद् विकासमापन्नेन हिन्द्याः पीनसशब्देन संस्कृतभाषागतस्य नासामलवाचकस्य पीनस-शब्दस्य नास्ति कश्चन संबन्धः। घुणाक्षरन्यायेन समानध्वनिमत्स्वपि प्राप्तेषु शब्देषु नानुसंधायकैस्ते मन्तव्या मिथः संबद्धाः। शिव-गङ्गा-ब्रह्मपुत्रादिशब्दानामपि संबन्धे कृतो विचारो वेदितव्यः।

तुलनात्मकव्याकरणशास्त्रमधिकृत्य ग्रन्थान् लिखितवतां यूरोपियन्पण्डितानामस्ति नूतना परम्परा। तत्प्रसङ्गे पीडर्सनमहाशयस्य 'लिंग्विस्टिक् साइन्स् इन् दि नाइन्टीन्थ् सेंचुरी' इत्यभिधेयो ग्रन्थो विलोकनीयः।

ऐतिहासिकभाषाशास्त्रस्य तुलनात्मकव्याकरणशास्त्रस्य वानन्तरं समकालिकभाषाशास्त्रमधुना प्रकामं प्रचारमवाप्नोति, तत्र कस्याश्चन भाष्यमाणाया भाषाया विभाषारूपाणि समधिकृत्य वर्ण्यत इति वर्णनात्मकं भाषाशास्त्रं तदीयं प्रथितं नामधेयम्। यद्यपि नास्ति संप्रति संस्कृतभाषा जनभाषा, तथापि प्रयतनीयं तज्ज्ञैः साधीयः।

---

१. द्र० रामकृष्णगोपालभाण्डारकरस्य 'दी क्रिटिकल, कंपेरेटिव, एण्ड हिस्टॉरिकल् मैथड् ऑव् इन्क्वायरी, बाम्बे १८८८ ई०।

ग्रन्थकाराणां जीवनस्य कालनिर्णयसंबन्धे न विधेया त्वरा। शिलालेखादीनामध्ययनं तत्र भृशमपेक्षितम्। साहित्यिकानि साक्ष्याणि नालं भवन्ति निर्णयं प्रस्तोतुम्। तेषामाधारेण कतिचन विद्वांसः कालिदासात् पूर्वम् अश्वघोषम्, कतिचिच्चाश्वघोषात् पूर्वं कालिदासं स्थापयन्ति।

अनुसंधानं नाम पञ्चाग्नितपः। एतद् अनुसंधायकेन स्वयमनुष्ठेयं भवति, नाध्यापकेन पथिप्रदर्शकेन वेति स्वोपज्ञताचिन्तनोपाया इह संक्षेपेण निर्दिश्यन्ते, अपेक्षणीयकल्पनाशक्तेश्च महिमा वर्ण्यते।

## चिन्तनशक्तिः

चिन्तनमहिमा—प्रायो भूयिष्ठं समयं जना यत्किमपि चिन्तयन्त्येव निसर्गतः। वस्तुगत्या चिन्तनमेव बौद्धिकजीवनसारः। मानव एव विचारशक्तिसंवलित इति पशुमानसाद् मानवमानसश्रेयस्त्वरहस्यमिदमेव विराजते। चिन्तनप्रावीण्याय १. स्पष्टतया, २. क्षिप्रतया ३. प्राबल्येन च विचारार्थं योग्यताऽपेक्ष्यते। विचाराधारेण मानवः परिस्थित्यनुसारेण स्वमनुकूलयति, वातावरणं च परिवर्तनपूर्वकमनुरूपयति यथावश्यकम्। महापुरुषास्तु स्वकीयोपज्ञविचाराधारेण स्वपरिस्थितीरनुकूल्य जगति क्रान्तिमवतारयन्ति। सभ्यतासंस्कृतिशिक्षाधारो विचार एव। सम्यक् चिन्तनं खलु महाप्रबलशक्तीनां जीवने साफल्याद्युत्कर्षाधायिकानामन्यतमम्।

विचाराधारेण सुचिन्तनेन च मानवदेहो भवति प्रभावितं चरित्रं चापि तथा खलु। मानसकार्यसामर्थ्यपरिभाषेयम्—तथ्यसंग्रहपूर्वकं तत्संबन्धे चिन्तनम्। संसारे सर्वाण्येवोपयोगीनि वस्तूनि तथ्यसंग्रहपूर्वकचिन्तनोद्भूतानि।

मनोयन्त्रालयस्य कृते तथ्यानि खल्वामसामग्री। चिन्तनं च मनोयन्त्रालये पक्वसामग्रीप्रस्तुतिकारणम्। मनोयन्त्रालये नववस्तूत्पादनान्तर्गतानि विचार-विधिरूपाणि वस्तूनि। मानवसभ्यतायां संजाता सर्वा समुन्नतिः सर्वतः प्रथमं कस्यचन मानवस्य मनोविचाररूपेण प्रकटितचरा।

अस्मदीया शिक्षा विचारकांश्चिन्तकान् प्रकटयेत् (तु० ऋषयो दीर्घसंध्यत्वाद् दीर्घमायुरवाप्नुयुः)। अस्मास्वनेके चिन्तनात् पलायमानास्तदपनोदनार्थमनेकविधव्यसनपरायणा भवन्ति। कस्यचन विदुषो मतमिदमिह सुसमीचीनम्—“अस्मास्वल्पिष्ठा विचारपरायणा भवन्ति। बहूनां

तु विचारसम्बन्धे विचार एव यत् ते विचारयन्तीति। भूयिष्ठास्तु मानवा विचारार्थं चिन्तनार्थं वा विचारं चिन्तनं वापि न कुर्वन्ति।"

## चिन्तनं न विज्ञानम्, अपि तु कला

चिन्तनं न विज्ञानम्, अपि तु कला, मनोरूपकार्यालयस्याऽऽवश्यकतानुसारेण नवविचारोत्पत्त्युपायानां नियमानां वैतावच्चिरं यावद् अविज्ञातत्वात्।

तर्कशास्त्रं विचारोत्पादने तथैवासमर्थं यथा व्याकरणं काव्यरचनायाम्। प्रभावकरं चिन्तनं नावलम्बते तर्कशास्त्रम्। तर्कशास्त्रं तु चिन्तननिष्कर्षपरीक्षणोपाय इति नूनं तदर्थं सहायकम्। विचारा अनुभवाज्जायन्ते, अन्तर्बोधाद् वा। अन्तर्बोधो विचारश्चोभौ तर्कशास्त्रसीमातीतौ। वस्तुतो मानवस्य यथेच्छं यथाकालं वा विचारशक्त्युपायं नापारयत निर्देष्टुं योगशास्त्रं मनोविज्ञानं वा। चिन्तनशक्तिसहायका केचिद् उपाया अत्र प्रस्तूयन्ते।

सामान्यतोऽनुभवगम्यानां विचाराणां पञ्च विभागाः क्रियन्ते—

१. निरुद्देश्यं निर्नियन्त्रणं च मनसि प्रकटिता विचाराः। मनोयोगपूर्वकं क्रियमाणकर्मवेलायामपि भ्रान्तं मनो निरर्थकेषु विचारेषु व्याप्रियते। एतादृशा विचारा आकस्मिका निरर्थकाश्च। स्वप्नगता विचारा अप्येतत्कोटिका भवन्ति। अस्माकं जीवनस्य पृथुलो भागो निरुद्देश्यविचारपरो मुधा याप्यते। एकाग्रताया न्यूनता मानसविक्षेपो वा व्यापको रोगः।

२. विश्वस्य चिन्तनम् असमालोचनात्मकम्। एतादृशे चिन्तने वयम् अन्येषां विचारान् ऋणरूपेण गृहीत्वा तान् स्वकीयान् मन्यामहे। इह तावद् अप्रतर्क्यं विश्वासस्य वाऽन्धश्रद्धाया वा प्रामुख्यम्। धार्मिकविचाराणाम्, सामाजिकविचाराणाम्, राजनीतिकविचाराणां च बहुलो भागो विश्वासमेव समाश्रयत इति सूक्ष्मेक्षिकया विलोकनेन स्पष्टं ज्ञायते।

"वयं विचारान् आणकैनैकेन प्रतिगृह्णीमः" इत्यभ्यधाद् एकदा लार्डकर्जनमहोदयः। तदानीं वृत्तान्तपत्राणि तावता मूल्येन लभ्यन्ते स्म। तत्संमतिप्रभाविताः साधारणजनाः स्वमतं स्थिरयन्ति स्म।

अद्यापि तत्कथने बाहुल्येन सत्यम्। अर्थशास्त्र-धर्म-समाज-राजनीत्यादिविषयानधिकृत्य मतान्यस्मदीयानि जननी-जनक-गुरु-मित्र-समाजतो गृहीतानि भवन्त्याधिक्यतः। तानि चासमालोचनात्मकविश्वासमयानि। स्वतन्त्रविचारका बुद्धिवादिनोऽपि मतान्यनेकानि, विना समालोचनं सन्देहं वा तत्प्रभाविता गृह्णन्त्येव। असमालोचनात्मको विश्वासः स्यूतवसनानीव रचितविचारान् प्रस्तुवन् मानसपरिश्रमं न्यूनयति।

३. ग्रहणात्मकं चिन्तनम् ( Assimilative Thinking )—अत्र चिन्तने खल्वन्येषां सकाशाद् विचाराणां ग्रहणम्, तदात्मसात्करणम्, आहोस्वित् कस्याश्चिद् विद्याया ग्रहणं शिक्षणं वोद्देश्यम्। यदि ग्रहणात्मकचिन्तनद्वाराऽध्ययनं न सुपुष्टयेत, तर्हि केवलं पठनेन उताहो मुहुर्मुहुरभ्यसनेन न कर्तुं पार्यते विद्याधिकारः।

अयं चिन्तनस्य व्यापक उपयोगी च प्रकारः। इह नवीनतथ्यानि समधिगम्य पूर्वसंचितज्ञानराशौ सम्मेल्यन्ते। इहास्माकं चिन्तनोद्देश्यं नानुसंधानम् आविष्कारं वा भजते; न वाऽन्येषां सकाशाद् गृहीतानां विचाराणां निगलनं भवति; अपि तु तान् विज्ञाय चिन्तनद्वारात्मसात्करणम्।

ग्रहणात्मके चिन्तने नूतनतथ्यानां विचाराणां वा संबन्धस्य योगः पूर्वार्जितज्ञानेन सह क्रियते। तत्र च नूतनतथ्यानि विचाराश्च श्रृङ्खलानीकाशा बद्धश्रेणयश्च सज्जीक्रियन्ते। एवं खलु ग्रहणात्मकं चिन्तनं वास्तविकी शिक्षा पाण्डित्यस्य प्राणभूता विज्ञेया। ग्रहणात्मकचिन्तनविधुरया शुकरटनशिक्षोपमया शिक्षया ज्ञानं संगृह्णाति विद्यार्थी, संगृह्णातु नाम, परीक्षासु चोच्चश्रेणीं वा प्राप्नोतु नाम, किन्त्वेतादृश्या शिक्षया पाठ्यविषयं नातिमात्रमवगन्तुं पारयेत सः, न च तद्बुद्धिविकासोऽपि भवेत्।

( क ) ग्रहणात्मकश्चिन्तने प्रथमं तावत् प्रतिपाद्यवाक्यांशार्थं यथासौष्ठवम् अवगत्य तदीया आनुषङ्गिका अर्थाः, प्रभावाः, परिणामाश्च साधीयोऽधिक्रियेरन्। शब्दानां वाक्यांशानां च पर्यायज्ञाने नेतिकर्तव्यता, किन्तु तत्सम्यगर्थज्ञानाय तेषां प्रयोगः स्वनिर्मितवाक्यरूपतया विधेयो येन भवेत् कार्त्स्न्येन तदर्थावगमः।

( ख ) नवीनतथ्यानि विचारा वा स्वकीये पूर्वस्मिन् ज्ञाने गुम्फनीयाः। तदुपायश्चेहायम्—नूतनविचाराणां तथ्यानां वा संबन्धः स्वपूर्वार्जिततथ्यैः साकं विधीयेत। पुरातनानां नवीनानां च विचाराणां सम्मेलनाय यथासम्भवम् अतिमात्रं संबन्धा गवेषणापूर्वकं स्थापनीयाः। यथा—सादृश्यं विरोधो वा, कारणं परिणामो वा, द्रव्यं गुणो वा, संपूर्णता वांशो वेत्यादयः।

( ग ) ज्ञानोपार्जने वर्गीकरणं (Classification) परमावश्यकी क्रिया। स्वमस्तिष्कस्य दशा काष्ठादिनिरर्थकवस्तुसंचायकभाण्डागारस्येव न विधेया। तत्र भाण्डागारे सर्वाणि वस्तून्यव्यवस्थितानि विकीर्यन्ते। स्वमानसगृहमानीता सर्वा सामग्री व्यवस्थितरूपेण सज्जीकरणीया। तत्र लघुलघूनि बहूनि खण्डानि कल्पनीयानि, यत्र प्रतिविषयम् एकस्मिन्नेकस्मिन् खण्डे

सामग्रीसञ्चयो जायेत। अनेन विधिना यथासमयं यथापेक्षं नियता सामग्री स्वस्थाने लप्स्यते, न तदन्वेषणे भवेद् आयासः।

( घ ) पृथक्पृथग्भूतानां वर्गाणां मिथः संबन्धः स्थापनीयः। तेषां मध्ये तार्किकाः संबन्धा योजनीयाः। विद्याया अनेकविधशाखानां परस्परं तुलनया तन्मध्ये निगूहितानि साद्दृश्यानि गवेषणीयानि।

४. निर्णयात्मकं चिन्तनम् (Deliberative Thinking)—इह तर्कप्राधान्यम्। कस्यचन प्रश्नस्य पक्षविपक्षयोस्तथ्यानां सूक्ष्मेक्षिकाणां च सम्बन्धे विधिपूर्वकं मननं चिन्तनं वा तत्समाधानपर्यन्तम्। एवञ्जातीयकेन चिन्तनेन मानवस्तद्दैनिकजीवनसमस्यानां समाधानं विचिनुते।

ग्रहणात्मकविचारादियम् उन्नततरस्तरा मानसी क्रिया। इह यत्किमपि स्वतन्त्रपद्धत्या चिन्तनं भवति। समस्यानां समाधानानि स्वतो गवेषणीयानि भवन्ति। वस्तुतो ग्रहणात्मकं चिन्तनं निर्णयात्मकचिन्तनस्य पूर्वपीठिका। निर्णयात्मकचिन्तनरूपद्वितीयसोपानारोहणाय ग्रहणात्मकं चिन्तनं प्रथमसोपानरूपम्। निर्णयात्मके चिन्तने समुपस्थितसमस्यया संबद्धानि तथ्यानि विवेकपूर्वकं क्रमश एकस्थीक्रियन्ते, वर्गीक्रियन्ते, परीक्ष्यन्ते सन्तोल्यन्ते च। कार्यस्य कारणम्, कारणाच्च कार्यं गवेषयित्वा समस्यायाः समाधानं स्वसम्मतिं वा निर्धारयन्ति तज्ज्ञाः।

नियतविषयं कामपि समस्यां वा समधिकृत्य भवति निर्णयात्मकं चिन्तनम्। आहोस्विद् मार्गद्वयेऽन्यतरस्य निर्णयेऽपीदमेव चिन्तनम् अपेक्ष्यते। परिचितमेकमार्गमवलम्बमानो यात्रिको निर्विचिकित्सम् अग्रेसरति निर्विचारम्। तत्र चाग्रे सति शाखान्तरे यात्रिकोऽन्यतरसमाश्रयणे विचारयति—'कतरम् अवलम्बेय' इति। उचितमार्गाश्रयणार्थं तत्र यात्रिकेण निर्णयात्मको विचारः समाश्रयणीयो भवति। तन्निर्णयार्थं च तेन समग्राणां तथ्यानां सम्भावनानां च ज्ञातव्यता करणीया भवति। तत्र च सम्यग् मननं निदिध्यासनं च विधीयेते।

भाविनि जीवने समुपस्थास्यमानानां सर्वासामेव समस्यानां पूर्वचिन्तितसमाधानस्य शिक्षणं नोद्देश्यं शिक्षायाः। शिक्षाया उद्देश्यं तु— "सुस्पष्टस्य दीर्घकालं यावच्चिन्तनाभ्यासस्य प्रवृत्तिः"। प्रवृत्त्यानया योग्यता प्रादुर्भवति मानवे—(१) स्वजीवने मार्गद्वयावलम्बिनीः परिस्थितीः शक्नुयाद् द्रष्टुम्, आहोस्वित् तादृशीः परिचिनुयात् समस्याः; (२) तदनु तासां समस्यानां समाधानार्थमपेक्षितां सामग्रीं शक्नुयात् संचेतुम्; (३) तदनु संगृहीततथ्यानि प्रमाणानि वा सन्तोल्य, सोहापोहं समस्याः शक्नुयात् समाधातुम्। अस्माकम् उचितशिक्षया

सत्यां सूक्ष्मेक्षिकायां बुद्धावनुसन्धानगतसमस्यानामभिज्ञानं शिक्षायाः परिपूर्णता। अस्माकं संस्कृतभाषाया अनुसन्धाने भूयिष्ठाः सन्ति प्रश्नाः समाधानार्थम्। तदर्थं निर्णयात्मको विचारोऽपेक्ष्यते।

विचारद्वैविध्ये निर्णयात्मकं चिन्तनमाश्रीयते। एवञ्जातीयचिन्तनं प्रश्नानां समाधानार्थमेव समाश्रूयते। निर्णयात्मकविचाराधारेणैव समाधातुमर्हति जटिलप्रश्नान् अनुसन्धायकः।

निर्णयात्मकं चिन्तनं विचारो वा भवति पञ्चसोपानात्मकः—

( क ) विचारार्थं तर्कार्थं वा कश्चिद् अपेक्ष्यते विषयः। सोद्देश्ये चिन्तने बुद्धेरुत्तेजनार्थम् आश्चर्यकारिणी काचन समस्या समाधानगवेषणाय परिश्रमम् अनुष्ठातुं प्रेरयेत्। तादृशः प्रश्नोऽनुसन्धातुर्हृदयं प्रभावयेद् इति तस्यानुरागस्तत्र परमावश्यकः। भावनापूर्वकमुत्तेजनया बुद्धेः कार्यं सुचारुरूत्या प्रवर्तते। इदं प्रथमं सोपानम्।

( ख ) समस्यायाः प्रश्नस्य वाऽस्पष्टता व्यपनेया। एतदर्थं समस्याया विस्तारं हित्वा संक्षेपेण तत्स्वरूपनिश्चयो विधेयः। समाधेयायाः समस्यायाः किं वास्तविकं स्वरूपम्? अस्पष्टस्य प्रश्नस्य समाधानात्मकमुत्तरं न सम्भवति। प्रश्नस्य तात्त्विकः स्वरूपपरिचयः खल्वर्धसमाधानसन्निभः। अतः प्रश्नकेन्द्रं निर्धारणीयम्। समस्याया वास्तविकस्वरूपविज्ञानाय तां खण्डेषु विभज्य पर्यायतः परीक्षेत समाधायको जनः। कस्यचिद् भयङ्कररोगस्य निदाने वैद्योऽपीमामेव पद्धतिमङ्गीकरोति। स व्याधितस्य लक्षणपरीक्षणानन्तरं स्वविस्तीर्णानुभवबलेन ज्ञानाधारेण च एकैकशः पूर्वपूर्वं समुपतिष्ठमानाः सम्भावना निराकरोति। एवं सति स रोगनिदानं क्रमश एकं केन्द्रं प्रति संकोचयन्, परिमितं कुर्वन्, अन्ते बहूनाम् अस्पष्टानाम् अनुमानानां स्थाने निर्णायकं प्रश्नम् अनुधावति। सत्येतस्मिन् समाहिते, तदीया मुख्या समस्या स्वतः समाधीयते।

निष्कर्षतः—कस्यचिदपि प्रश्नस्य समाधानविधौ प्रथमतो मूलप्रश्नान्वेषणम्। इदमेव चिन्तनक्रियाया दुरवबोध्यम् अङ्गम्। अनेन विधिनाऽस्पष्टं चिन्तनं सुस्पष्टायते, प्रभावकारि च जायते। ये सम्यगनुसंधित्सन्ते, ते स्वप्रश्नपरीक्षणस्य तत्केन्द्रानुधावनस्य च प्रवृत्तिम् अवश्यं विदध्युः। द्वितीयं सोपानमिदम्।

( ग ) कस्यचिदपि प्रश्नस्य यथासम्भवं समाधानानि समुपस्थाप्य चिन्तनपूर्वकं सम्भावितो निर्णयः ( Hypothesis ) समाश्रयणीयः। समस्याया मर्मसु निश्चयतो निर्धारितेषु सत्सु तत्समाधानान्वेषणं विधेयम्। कतिपये सम्भाविता निर्णयाः समाधानानि ( Hypothesis ) वा प्रकल्पनीयानि। तदनु प्रतिसमाधानं पक्षविपक्षयोस्तथ्यानि

राशीकृत्य विचारणा प्रवर्तनीया। तत्र विचारणायां स्वज्ञानानुभवौ कृत्स्नमुपयोजनीयौ। कस्मिंश्चिदप्युपयोगिनि विचारे, इतरविचारनिरोधकमोहो नाविष्करणीयः। मत्युद्गतं प्रश्नस्यादिमं समाधानमेव न कदाप्यङ्गीकरणीयमसमीक्ष्यकारितया। सत्यपि तस्मिन् भृशं मनोहारिणि, वैकल्पिक-समाधानानि नूनं गवेषणीयानि, प्रकर्तव्यानि च विचारणाविषयाणि। सत्यपि प्राप्ते स्वप्रश्नस्य समाधाने, गवेषणीयान्यन्यानि मूलतो नवीनानि समाधानानि लिपिपुस्तकाङ्कितपूर्ववर्ति-समाधानस्य चित्तादपसारणपूर्वकम्। कस्याश्चिदपि समस्याया एकस्माद्धिकानि भवन्ति समाधानानीति श्रेष्ठेनैव संतुष्येत् समाधानेनानुसंधानार्थी।

संप्राप्ते सत्यप्येकस्मिन् समाधाने, सम्भवतो भवान् अतितरां नूतनविचारधाराम् अवलम्ब्य ततोऽप्युत्कृष्टतरं शक्नुयात् समधिगन्तुं समाधानम्। श्रेष्ठविचारका नातिसरलतया संतुष्यन्ति केनचिदपि समाधानेन। ते चरमनिर्णयानुधावने चापल्यमनङ्गीकृत्य, धैर्यमाधाय, साध्यवसायं सूक्ष्माणि विचिन्वन्ति समाधानानि। इदं तृतीयं सोपानम्।

( घ ) सम्भावितनिर्णयपरिणामाः परीक्षणीयाः। प्रस्तावितसमाधानस्य स्वीकरणात् पूर्वं समाधानस्य सत्यत्वं तत्परिणामानां चौपयिकत्वं समीक्षणीयम्। तत्रोपस्थिता आपत्तयः शङ्काश्च मननीयाः। भवता स्वकीयविचाराणां समालोचनाऽपरैर्विधापनीया। असति समालोचके स्वत एव स्वचिन्तनप्रतिकूला आक्षेपा आपत्तयश्च विचेयाः। आसामापत्तीनाम् आक्षेपाणां च सम्बन्धे चिन्तनेन सूक्ष्माण्यन्यान्यपि समाधानानि संलभ्येरन् ध्यानपथमनारुह्यमाणानि।

सुदक्षो विचारकश्चिन्तनशीलो वा तर्कस्य सत्यस्य च प्रकाशावाप्तये स्वमनोगवाक्षम् अनावृतं विधत्ते। आपत्तीनां संबन्धे विचारार्थं सन्ततम् उद्युङ्क्ते। केचिद् जना अहङ्कारवशात् स्वप्रतिष्ठाविचाराद् वा स्वप्रियतरमन्तव्यप्रतिकूलं किमपि श्रोतुं चिन्तितुं वा नेहन्ते।

स्वचिन्तनप्रक्रियासम्बन्धे स्वसुहृदादिनिर्दिष्टा आपत्तय आक्षेपाश्च स्वागतीकर्तव्या मनःप्रयोगलाभेच्छुकैः। इदं चतुर्थं सोपानम्।

( ङ ) अफल्गुविचारस्य पञ्चमं सोपानम्—चरमस्य समाधानस्य निश्चयस्तत्परीक्षणं चेति। प्रास्ताविकं स्वसमाधानं नीतिर्योजना वा प्रयोगाधारेण यथासम्भवं परीक्षणीये। स्वविचारस्य सत्यत्वपरीक्षणविधौ यथाशक्ति तथ्यान्यन्यान्यपि संग्राह्याणि। किमपि मतं समाधानं वा कात्स्न्र्येन सावधानतया च सुपरीक्ष्यैव स्वीकर्तव्यम्। प्रायेण विचारकाः स्वसमाधानाकृष्टचेत-सास्तत्फलमवाप्तुं त्वरन्ते। नैतदुचितम्। निपुणविचारकपदमभीप्सद्भिर्गवेषकैरन्तिमनिर्णयो निकामं सावधानतया विधेयः।

५. रचनात्मकम् उत्पादकं वा चिन्तनम् ( Creative Thinking )—इदं खलु सर्वोत्कृष्टकोटिकं चिन्तनम् अनुसन्धानार्थिनां हिताय कल्पते । एवञ्जातीयकस्य चिन्तन-स्योद्देश्यम्—( क ) प्रकृतिरहस्यानुसन्धानम्; ( ख ) नवयन्त्राणां पदार्थानां वा निर्माणम्, ( ग ) आहोस्वित् कलामयीनां कल्पनामयीनां स्वोपज्ञकृतीनां रचना भवति । स्वोपज्ञता, प्रकृति-रहस्यानुसन्धानम्, नूतनानां युक्तीनां यन्त्राणां वाविष्कारः, ज्ञानसीमाविस्तारः, नवीनयोजनानां निर्माणम्, प्रत्यग्रकृतीनां रचना वा सर्वोच्चविचारप्रकारस्योद्देश्यम् । नूतनविचाराणां नवीन-तथ्यानाम् अभिनवानां च समाधानानां गवेषणा मानवजात्यविज्ञाता रचनात्मकचिन्तनपरिणामा । बहुषु मार्गेषु वान्यतमो वा मार्गो निर्णयात्मकचिन्तनप्रकारे निर्धार्यते । रचनात्मकचिन्तने तु—अविज्ञातमार्गके स्थले भवति विधानीयो मार्गः ।

रचनात्मके चिन्तने प्रबलं भावावेगोत्तेजनमपेक्ष्यते । तदुक्तं योगशास्त्रे—"तीव्रसंवेगा-नामासन्नः" इति । अस्मादेव तीव्रसंवेगाद् उत्तेजनाद् वा विशिष्टा शक्तिराविर्भवति । इयं विशृङ्खलान् विचारान् एकीकरोति, विचाराणां तथ्यानां च संग्रहार्थं प्रयासाय प्रेरयति । तीव्रसंवेगोऽयम् अस्मांस्तदैवोपैति; यदा वयं निजमानसं पूर्णसंकल्पेन कस्मिंश्चित् सुरोचके कार्ये विचारक्षेत्रे वा योजयामहे । मनोनीतविषयकोऽनन्यानुरागोऽलं तत्सम्बद्धज्ञातव्यता-संग्रहाय, तत्र मननाय, तद्विश्लेषणाय, तदात्मसात्करणाय चेत्यनुभवो गवेषणाविचक्षणानाम् ।

## केचन चिन्तनोपायाः

### ( क ) 'ज्ञानानुभवसंपन्नं विदध्याद् मानसं जनः'

न किमपि वस्तु शून्यात् प्रादुर्भवतीति जिज्ञासन्ते जिज्ञासवः—'विचाराः कस्माद् उद्भवन्ति ?' इति । अत्रेदमुत्तरम्—विचारा उद्भवन्ति तथ्येभ्यः, तथ्यसंपृक्तादस्मदीय-संसर्गाच्च । अस्मादेवापरिपक्ववस्तुतत्त्वात् परिपक्वां सामग्रीं रचयति नो मनोयन्त्रकम् । प्रथमतः समर्जितं ज्ञानम् अनुभवश्च भवतां चिन्तनसामग्री । उभयमाश्रित्य भवतां चिन्तनं प्रवर्तते, नान्यथा । तत्सकाशादेव भवन्तो नवीनविचारान् उत्पादयन्ति । पूर्वसञ्चिततथ्यानि, विचाराश्च मानसं चिन्तनाय प्रेरयन्ति, न तथान्यत् किमपि । यदि कोऽपि विचारकः स्वचिन्तन-गतिमवरुद्धामिव लक्षयति, तर्हि स तथ्यानि प्रति धावति, पुनरीक्षते तानि, आलोडयति च मनसि परावर्त्य पुनः पुनः ।

स्वविषयज्ञानपाण्डित्यं चिन्तने सौविध्यं जनयति, स्वोपज्ञतायाश्चोपस्थापनेऽत्यावश्यकम् ।

## ( ख ) शब्दसंपत्तिर्वर्धनीया

विचारः खल्वेकविधं भाषणम्, स ह्युपवाणीव। यथा शब्दैर्विना वाणी न सम्प्रवर्तते, तथैव शब्दान् विना विचारोऽपि न सम्प्रवर्तते।

सम्भवतः पशूनां विचारशक्त्यभावकारणं तेषां वाक्शक्त्यभावः। येषां वन्यजातीयानां जनानां मस्तिष्कम् अस्माकमिव निशितमस्ति, तेऽपि शब्ददारिद्र्यात् स्वमनस उपयोजने सम्यग्विचारणे वाऽसमर्था जायन्ते।

शब्दा वस्तुतः सङ्केतरूपाः। अतः समीचीनरूपेण चिन्तनाय शब्दानामर्था यथायथम् अवगन्तव्याः। नवीनानां शब्दानां शिक्षणाय प्रयत्नो विधेयः। तेषाम् अस्पष्टेन आनुमानिकेन न्वार्थेन न कदापि सन्तुष्यन्तु भवन्तः। शब्दकोशसाहायकेन सम्यक् तदर्थो ज्ञानीयः।

## ( ग ) चिन्तनक्रिया यथेष्टं समयम् अपेक्षते

सम्यक् चिन्तनं पर्याप्तं समयम् अपेक्षते। चिन्तनं स्वतः प्रवृत्तिमयी क्रिया, न कला। सर्वविधा विचारा अध्यवसायं समयं चापेक्षन्ते। जटिले महिष्ठे च सति प्रश्ने, तत्समाधानार्थं तावानेवाभ्यधिकः समयो भवत्यपेक्षितः। चिन्तनक्रियायां मध्ये मध्येऽवकाशकाला अपि भयन्त्युपयोगिनः, एतस्मिन् कालेऽज्ञातमानसं ( Unconcious Mind ) तदीयं साहाय्यम् आचरति। यदा चिन्तनक्रियानन्तरमवकाशकाले भवन्तो चिन्तनक्रियाविधुरा इव प्रतीयन्ते, तदाऽज्ञातमानसं समस्यां समादधाति। तस्मिन् कालेऽज्ञातमानसमवसरं प्राप्नोति भवत्साहाय्यार्थम्। अतः कामपि समस्यां समादधता जिज्ञासुना शयनान्ते तादृशीनां जटिलसमस्यानां समाधानं प्राप्यते, यासां समाधानं चेतनमानसेन बहुकालं प्रयत्यापि न लब्धुमपारि। अतो हेतोः कदाचिदयं परामर्शः दीयते—दिवसे बहु प्रयत्यापि कश्चित् प्रश्नो न समाधीयेत, तर्हि नक्तं शयनात् पूर्वं तत्र चिन्तनं विधाय, पुनस्तं ध्यानादपसार्य निद्रा द्राघणीया; प्रतीक्ष्यताम्, किं प्राप्यते प्रग इति।

## कल्पना स्वोपज्ञता च

१. पुनरुद्भाविका, २. रचनात्मिका चेति द्विधा भवति कल्पना। पुनरुद्भाविकायां कल्पनायां पुरातनविचाराणां प्रतिमानां च भवति पुनरुद्भवः। रचनात्मिकायां च कल्पनायां नवीनानां प्रतिमानां विचाराणां च भवति निर्माणम्।

## ( १ ) पुनरुद्भाविका कल्पना

ऐतिह्य-साहित्य-कलाप्रभृतीनां सम्यगवगमाय भवति कल्पनाया अपेक्षा। कालस्य लेखकस्य कलाकारविचाराणां वा चित्राणि यदा मनोभित्तौ सुस्पष्टम् अङ्कितानि भवन्ति, तदैवेमे विषयाः सम्यगवगम्यन्ते। एवमेव विज्ञानविषयकाय संज्ञानायापि सुतरामपेक्ष्यते कल्पना। मनोभित्तावणूनां परमाणूनां वा सम्यक् चित्राभावे न भवन्तस्तानवगन्तुं प्रभवेयुः। कल्पनाया इमाः सर्वाः क्रियाः पुनरुद्भावककल्पनात्वेन बोद्धव्याः। अनया पुनरुद्भावककल्पनया वयं स्वमानसे तानि चित्राणि पुनरुपस्थापयामो यान्यन्येषां लेखनेन व्याहरणेन वेतः पूर्वम् अङ्कितान्यभवन्। इयं कल्पनाऽतीतचित्राण्यस्माकं समक्षमुपस्थापयति। एवमेवैषा भूतकालिकैर्भू-पतिभिर्महर्षिभिर्वीरैश्च सार्धं निवासार्थम् अवसरं प्रददाति।

कल्पनयानया कार्यमस्मदीयं भवत्यनुकृतिप्रधानम्; न त्वग्रणीस्थानम्; अनुकरणरूपम्, न तूत्पादकम्; नवीनानां विचाराणामवगमः, न त्वाविष्कारः।

## ( २ ) रचनात्मिका कल्पना

अन्यदीयविचाराणाम्, भावानाम्, कृतीनां चावगमाद् अतिरिक्तम् अस्ति कल्पनाया अन्यदेकं महिष्ठं कार्यम्। कविताया अध्ययनापेक्षया काव्यनिर्माणे, चित्रस्य दर्शनापेक्षया स्वतश्चित्ररचनाकाले न भवति भवतामुद्देश्यमन्येषामनुकृतिः। तत्र त्वभिनवोदाहरणस्यापेक्षा। कल्पनाया इयं क्रिया भवति—रचनात्मिका क्रिया। नवमार्गदर्शकानाम्, नवविचारप्रवर्तका-नाम्, नववस्तूत्पादकानां च कृतमुखानां महत्यपेक्षा जगतः प्रगत्यर्थम्।

## ( ३ ) कल्पनाशक्तेर्महिमा

इयं साफल्यमवाप्नुवतां मानवानां विशेषलक्षणम्। नूतनप्रकाराया व्याकरणकौशल-कल्पनायाः कारणात् पाणिनिर्महावैयाकरणोऽभूत्। नवनवानां सम्भावनानाम्, नवनवस्य कार्याणां क्रमस्य, संघटनानाम्, कार्याणां च नूतनपद्धत्याः प्रादुर्भावः कल्पनाशक्तिमपेक्षते। न्यूटनसदृशैः, आइंस्टाइनसदृशैश्च विचारकैर्नूतनविचारप्रणाल्याः स्थापना नाकारि ज्ञानस्य बृहद्भाण्डागारकारणात्, अपि तु स्वमानससामग्र्याः साहाय्येन विचाराणां व्याख्यानां च नूतन आकल्पः प्रणीतः।

साधारणतो रचनात्मिका कल्पनैव साफल्यस्य प्रधानं सूत्रम्। कस्याश्चित् संस्थायाः परम्परागतप्रबन्धकात् स ज्यायान् भवति प्रबन्धको यः कार्यविधौ नूतनपद्धतिमनुसंदधाति,

तदनुसारेण च प्रत्यग्रम् आरचयति कार्यकौशलम्। प्रतिकार्यक्षेत्रं विकासनीया शिक्षणीया च स्वकल्पनाशक्तिः।

अनागतमाध्याय कल्पनाऽस्माकं कृते प्रतिरूपाणि (Specimen) योजनाश्च निर्माति। साऽनागतानां घटनानां चित्रमस्माकं सम्मुखमुपस्थापयति, तासां च न्यूनांशत आभासमादावेव कारयति। अस्मदीयेन केनचिदपि कार्येण खल्वनागते किं फलं सम्पद्येत; अस्मदीयेन वचनेन लेखेन वान्ये किमिव प्रभाविता भवेयुः; अस्मदीयस्य कस्यचित् प्रस्तावस्य प्रार्थनाया याचनाया वा प्रसङ्गेऽन्यदीयाः काः का आपत्तयः सम्भाव्यन्त इत्यविकलं प्रथमत एव कल्पनासाहाय्येन पार्यते बोद्धुम्। अस्या एव बलेन वयम् अन्येषां मनसि समुत्पत्स्यमानान् विचारान् पूर्वत एव सम्भावयाम इति समुद्युञ्जामहे समाधातुं तेषां शङ्काः। घनान्धतामसे प्रचलतः पथिकस्य दीप इवोपकारिकेयं कल्पना मनःप्रवाहस्य कृते।

कल्पनैव खल्वात्मसूचनाधारा, भविष्यच्चित्राणां कल्पनया घट्यमानानाम् अनागते सत्यरूपेण प्रत्यक्षं प्रकाशितत्वात्। कल्पनासाम्राज्यं विश्वमधिकरोतीति सुष्ठूक्तं नेपोलियनेन। एवमेव भवदीया कल्पना भवन्तं शास्ति।

मानसशक्तीनां मध्ये कल्पना शीर्षण्या। नूतनविचाराणाम् आविर्भावः, नूतनतथ्यानां गवेषणा; साक्षात्क्रियमाणे वर्तमानसंसारे लेशतोऽप्यविद्यमानानां तथ्यानां स्पष्टरूपेण प्रत्यक्षी-करणम्; येषामस्तित्वं भवति सम्भावनायाम्, भविष्यति, अतीते वा जगतीतीदं सर्वं कल्पनायाः कार्यम्।

## (४) कल्पनाशक्तेर्विकासः

अल्पांशा कल्पनाशक्तिर्नूनं शक्यते वर्धयितुम्। प्रकृतितः प्रतिभासम्पन्नानां शक्तयः समयेन वृद्धिमुपगता लक्ष्यन्ते। आदित एव ते पूर्णां स्वशक्तिं प्रारभेरन् प्रकटयितुमितीदं विरलतमम्। समयेनैव तदीया योग्यता सुविस्तृता स्वोपज्ञा च सती चरमसीमानमुपैति। कालिदासस्य शेक्सपियरस्य च रचनाभिरपि क्रमशस्तदीयो रचनाविकासो ज्ञायते। तावपि स्वकीयेन कार्येण जीवनानुभवेन च स्वकल्पनाशक्तिं पोषयन्तौ परिवर्धयन्तौ च प्रतीयेते। औदासीन्यं नैराश्यं स्वशक्त्यनभिज्ञताभावं च हित्वाऽन्येषामिव भवानपि कल्पनाशक्तिसाहायकेन शक्नोति कर्तुम् आत्मनः समुन्नतिम्।

## ( ५ ) स्वोपज्ञताया रहस्यम्

आविष्कारप्रवणं मानसं ( Mental Association ) मानसिकस्य सहचारस्य पुरातनान् स्वभावान् हित्वा नूतनान् स्वभावान् आस्थापयन्ते । निर्झरलेखन्या अनुसन्धानमधिकृत्य किमप्युदाह्रियते । मानवाः समतूतुषन् पुरातनीं लेखनसहचारप्रणालीमनुसरन्तः । तत्रैकत्र लेखनी, अपरत्र च मसीपात्रम् अभूताम् । तत्र सहचारे नासीत् कस्यचिद् मानसे शङ्काङ्कुरः । जनास्तमेव सहचारमन्तिमम् अवगच्छन्ति स्म, यथा वयमद्यत्वेऽप्यनेकानि वस्तूनि मन्यामहे चरमाणि । लेखनीमसीपात्रयोस्तस्मिन् सुपुरातने सहचारे शङ्कोदय एव आरम्भ आविष्कारक्रियायाः । लेखन्या अत्र, मसीपात्रस्य च तत्र स्थापनं किमर्थमावश्यकम् ? सकृत् सत्येवं शङ्कोदये नास्त्यग्रे दुर्ज्ञेयत्वम् । समनन्तरमेव समुदेति प्रश्नः–"कुतो न नूतनः सम्बन्ध आस्थापनीयो लेखन्या मसीपात्रस्य च ?" इति । एतदनन्तरं नैसर्गिकोऽयं प्रश्नः—"कीदृशो नूतनः सम्बन्धः ?" इति । जिज्ञासुमानसम् इहानवाप्य किमप्युत्तरं शक्नोति स्म विरन्तुम्, अनुसन्धानं त्यक्तुं वा । एवं सत्यपि तत् ततोऽप्यग्रे शक्नोति प्रष्टुम्—"कुतो न मसीपात्रं लेखन्या सह निधीयते, आहोस्वित् तद् लेखन्या अभ्यन्तर एव कुतो न क्रियते ?" इति ।

प्रक्रियेयं प्रतिरूपकात्मिका ( Typical )। तस्या अङ्गद्वयम्—१. नित्यानुसारिषु पूर्वतः प्रवर्तमानेषु सम्बन्धेषु सन्देहः ( यथा—लेखन्यत्र, मसीपात्रं च तत्र ), २. नूतनानां सम्भविनां सम्बन्धानां गवेषणा च ( यथा—मसीपात्रं लेखन्या अभ्यन्तरे ) । एवमेव मणिबन्धघटीयन्त्रसम्बन्धेऽपि विश्लेषणीयम् ।

एवं खलु स्वोपज्ञतारहस्यम् उद्घाट्यते । कल्पना नास्ति नूतनवस्तूनां जननी । सा तु पुरातनवस्तूनि विचारांश्च विपर्यासपूर्वकं नवीनसंयोगानामाधारेण समुपस्थापयति । केनापि मानवेन दुर्बलकल्पनाशक्तिमता प्रबलकल्पनाशक्तिमता वा पदार्थानां कार्याणां चाभ्यस्तसम्बन्धान् प्रति सदा शङ्क्येत, अपि तत् कार्यं केनाप्यन्येन प्रकारेण शक्यतेऽनुष्ठातुम् ? इत्येवम् अनुयुज्यमानेन स्थीयेत ।

## ( ६ ) कल्पनाऽन्तश्चेतना च

इदानीमपि मस्तिष्कस्य मस्तिष्कक्रियाणां तद्रचनात्मकशक्तीनां च सम्बन्धे भूयिष्ठं रहस्यम् । कल्पनायां सचेतनस्याचेतनस्य चोभयविधस्य मानसस्य संयोगस्तिष्ठतीत्यवगम्यते । आधिक्यत उत्कृष्टकोटिकं मानसिकं कार्यम् अन्तश्चेतनामवलम्बते । मिल्टनद्वारा कृतं गणितानुसन्धानमिह सूत्तमं निदर्शनम् । पञ्चदशवर्षाणि यावद् एकं प्रश्नं समादधतापि तेन नावापीषत्

साफल्यम् । एकदा पत्न्या सह परिभ्राम्यता तेन वैचारिको विद्युत्परिधी रुद्ध इवानुभूतः । तस्मात् परिधेः स्फुलिङ्गा इवोद्भूताः । स्फुलिङ्गरूपाणाममीषामेव समीकरणानामनुसन्धाने तेन बहूनि वर्षाणि यापितान्यासन् । स तदानीमेव समङ्कितवान् टिप्पणपुस्तके तानि समीकरणानि ।

पुरातनीयं नवीनविचारावाप्तिपद्धतिः । संवेशात् पूर्वं स्वेष्टविषयमधिकृत्य गम्भीरचिन्तनं क्रियते । एवं करणेन, एकदा प्रातस्तत्समाधानं लभ्यत इत्यनुभवेन ज्ञातं पुरातनैर्जनैः ।

## ( ७ ) कार्यक्षेत्रस्य नैयत्यम् ( प्रथमो नियमः )

कल्पनाशक्तेर्विकासे प्रथमं सोपानम्—योग्यतानुसारेण सुनिश्चितविषयस्य निर्धारणम् ।

मानसिक्यः शक्तयः क्रियाश्च भवन्ति विशेषोन्मुख्यो न तु व्यापिकाः । अवधानं कल्पना स्मृतिश्चैतादृश्यः शक्तयः कस्मिंश्चित् सुनिश्चिते क्षेत्रे पार्यन्ते कर्तुं समुन्नताः । गणितप्रवीणस्यापि कस्यचन जनस्य बुद्धिरितिहासे व्याकरणे वा न रमते ।

मानसिक्यः समग्राः शक्तयः क्रियाश्च समुन्नता जायन्ते वृतेषु विशिष्टेषु क्षेत्रेषु । एवमेव कल्पनायाः सम्बन्धेऽपि ज्ञेयम् । उत्कृष्टकोटिका कल्पनाशक्तिर्विशेषपद्धत्या कार्यं करोति । कल्पनायाः कार्यं भवति बाढं विशिष्टप्रकारकम् । अस्याः सुप्रथितं निदर्शनमस्तिचार्ल्सडार्विनः । वर्षाणि यावद् विज्ञानमधिकृत्य मानसैकतानतायाः कारणादहं व्यलोपयं कवित्वस्नेहम् इति स स्वजीवनस्य चरमे भागे प्राकाशयत् । वयमपि सर्वे तथैकविषयप्रवणा भविष्याम इतरविषयपराचीना इति नेदमावश्यकम् । एवं सत्यपि, यदि वयं व्रीहीनुत्पिपादयिषामस्तर्हि क्षेत्रे न जातुचिद् वपामः कोद्रवान् । कल्पनाविषयेऽप्येवमेव वेदितव्यम् । किञ्जातीयकं धान्यम् उत्पादनीयम् इति निर्णेयं भवद्भिः प्रथमतः । ततोऽभिप्रेतानि बीजानि स्वमानसक्षेत्रे वपनीयानि । पुनश्च तेषां सेचनाय संवर्द्धनाय च सर्वतोभावेन निरता भवेयुः ।

## ( ८ ) कल्पनायाः सामग्री ( द्वितीयो नियमः )

रचनात्मककल्पनायाः कार्ये न भवति किमपि वस्तु सर्वथा स्वोपज्ञं वा नवीनं वा । मौतिकजगद्वद् मानसजगत्यपि मानवो न किमपि नूतनं वस्तु शून्याद् उत्पादयितुं प्रभुः । पूर्वतो विद्यमाने वस्तुनि परिष्कारं परिवर्तनपूर्वकं नवीनक्रमं रूपं वा नूनमर्हति कर्तुम् ।

ज्ञानेन सह नास्ति कल्पनायाः कश्चन सम्बन्धः, शून्याच्च कस्यचिदुत्पादनं मानसिकरचनाया ऐदम्पर्यमिति केचिद् अवगच्छन्ति। तन्न विचारसहम्। मानसावयवीभूतं परिपक्वं ज्ञानं कल्पनायाः परमाधारः। स्कौट-डार्विनप्रभृतिभिर्वैज्ञानिकैश्च महता परिश्रमेण स्वकीयेषु विषयविशेषेषु विश्वकोशज्ञानं समचायि। एतैः स्वकीयानां नवीनरचनानां सामग्री दृषद्रूपतथ्येभ्यः खनित्वा समधिगता। इह सर्वत्र कठोरश्रमोऽभून्मूले। कस्यचिदपि विषयस्य सम्यग् ज्ञानमन्तरा न कोऽपि तत्र साधीयो विचारयितुमर्हति। यथेष्टं ज्ञानादृते नोद्भवन्ति मनसि नूतना विचाराः। अल्पीयस्या मात्रया च समुद्भवे नास्ति मूल्यवत्ता। अतस्तथ्यान्येव नवीनविचाराणां सुप्रवर्तकानि। एतदर्थं यदि भवन्तो विचाराभावेन रुद्धगतयो भवेयुस्तर्हि तथ्यानि प्रति सुध्यायेयुः। नवीनानां साधनानां नवीनकार्यपद्धतेश्च ज्ञानाय श्रेष्ठेयं पद्धतिः। मानवानां ज्ञातव्यताया रचनात्मकयोग्यतया ( स्वोपज्ञविचारयोग्यतया ) सत्रा नियतः सम्बन्धः। कालिदासेन शेक्सपियरेण च स्वकीयानाम् आधिक्यतो रचनानां सामग्री पुराणग्रन्थेभ्यः संगृहीता। कार्लाइलो महतायासेन लिखति स्म। स लेखिष्यमाणस्येतिहासस्य प्रतिपृष्ठं लेखनात् पूर्वं तद्विषयकाणि ज्ञातचराणि सर्वाणि पुस्तकानि पर्यालोडयति स्म। कस्यचित् पुस्तकस्य प्रणयनाय तत्प्रणेत्राऽर्धादधिकः पर्यालोडनीयः पुस्तकालय इत्यस्ति डॉक्टर-जान्सनस्य परामर्शः। मनोयन्त्रालये नूतना पदार्थास्तदैव निर्मीयन्ते, यदा तत्रापरिपक्वा सूक्ष्मा सामग्री प्राज्यतया निवेश्येत।

## ( ९ ) व्यासेन विश्लेषणम् ( तृतीयो नियमः )

संगृहीताया मानसिक्याः सामग्र्याः प्रश्नानां वा तथ्यान्यधिकृत्य गभीरं चिन्तयेद् विस्तारपूर्वकं च तानि विश्लेषयेदित्यस्ति तृतीयो नियमो नूतनविचारोद्भावनार्थम्। विषयसम्बद्धानां तथ्यानां सम्यगवगमे मूल्यनिर्धारणे च सत्येव भवतां कल्पना द्वित्रा अधिका वा प्रतिमा एकीकर्तुं शक्नोति, तत्र च नूतनं विचारम् उद्भावयितुं प्रभवति। सुस्पष्टानां विचाराणां साहाय्येन सौविध्यपूर्वकमन्यान् नूतनान् विचारान् उद्भावयितुं प्रभविष्यन्ति भवन्तः।

सविस्तरं तथ्यानां विश्लेषणेन सन्त्यनेके लाभाः—१. इदं मनःस्थितान् विचारान् क्रमपूर्वकं बध्नाति, २. अद्यावध्यविज्ञातानां तथ्यानामन्वेषणे साहायकं विधत्ते, यथा हि रासायनिकविश्लेषणेन वैज्ञानिकै रेडियमः समधिगतः, ३. उपमानां समानतानां वान्वेषणे मानसस्य साहाय्यं सम्पादयति ( प्रायो विशिष्टाः समानताः शबलतया भवन्ति निगूहिताः );

४. वास्तविकस्य संश्लेषणस्य कृते मार्गं प्रशस्तयति । एवं खलु सावधानतया कृतेन विश्लेषणेन प्रायः सदैव नवीनपरिणामाविर्भावस्तिष्ठते ।

## ( क ) मननं चिन्तनं च–

अध्ययनकक्षत्यागसमनन्तरमेव न त्याज्यं स्वकीयमध्ययनम् । साधारण्येन जीवनोपायं कामयमानस्य भवत इदं कार्यं प्रकामं साधीयः, तथापि काल्पनिक्या दूरदर्शितायाः प्रापणाय नेदमुचितम् । भवता स्वकीयं कार्यं सर्वत्र परिभ्रमता यत् किमपि कुर्वाणेन वा मनसि निधेयम् । मूल्यवन्तश्च विविक्तावसरा उपयोजनीयाः । एतादृशानाम् अवसराणामुपलम्भाय यतनीयम् । एषामेवावसराणामुपयोगेन भवान् विशेषज्ञादधिकतर उत्पादकविशेषज्ञो भवितुमर्हति समतीते काले ।

पुरुकार्याधारकात् स्वपीठादपयाते सति भवति, नहि सकलानि कर्माणि मनसि निधेयानि । केवलं महिष्ठाः प्रश्ना एव विचारणीयाः । तेषां स्थविष्ठाः सम्बन्धा भूयः सध्रीचीनतया वेदितव्याः, तदर्थं च प्रयतनीयम् । के के परिष्कारास्तत्र कर्तुं युज्यन्त इति चिन्तनीयम् । एवं करणेन मानस्याः क्रियायाः प्रवाहो भवतां स्वाभीष्टविषयं प्रति निरवरोधं स्यात् । अनेकासां सफलतानां रहस्यमवकाशघटिकानामुचितोपयोगेऽस्ति सन्निहितम् ।

चिन्तनेन मननेनाभ्यासेन च सुप्रथिता विद्वांसः कवयश्च स्वरचनाः प्राणैषुः । ऐडमस्मिथेन Wealth of Nations ( राष्ट्राणां सम्पत्तिः ) इत्याख्यग्रन्थरचनाप्रसङ्गे हापिता दश वर्षाः, गिब्बनेन ( Gibbon ) च Decline and fall of the Roman Empire ( रोमनसाम्राज्यस्यावनतिभ्रंशश्च ) इत्याख्यग्रन्थप्रणयनप्रसङ्गे विंशतिसंख्याका हापिता वर्षाः । रिड्यार्ड-किप्लिङ्गमहोदयः प्रणीतायाः स्वरचनायाः पाण्डुलिपिं कालान्तरे समधीत्य तत्रत्याननावश्यकान् शब्दान्, प्रसङ्गान्, तत्रत्यान्यनावश्यकानि वाक्यानि च नाशयति स्म मसीलेपनेन । एवं तावत् तदीयरचनायाः पाण्डुलिपिर्वर्षत्रयं यावत्, कदाचिच्च वर्षपञ्चकं यावत् पेटिकायां निधीयते स्म तेन । प्रतिवर्षं चोत्तरोत्तरं भजते स्म संक्षेपम् । विंशतिवर्षाणि निरन्तरं कृते चिन्तने नेपियरमहोदयो लघुगुणकस्य ( Logarithm ) अनुसन्धानं कर्तुं प्राभवत् ।

महामुनेः पाणिनेश्च रचनैका प्राप्यते महिष्ठा स्वजीवनाध्यवसायरूपा । तावन्मात्रेणैवामृतत्वं प्रापि तेन । भगवतः पतञ्जलेश्च महाभाष्यमद्वितीयमतिशेते सकलानि व्याख्यानानि । अहो चैन्तनीयकमस्माकमृषीणां मुनीनां च । संस्कृतवाङ्मयमेतादृशानां प्रपुष्टचिन्तनानामागारम् । अहो

मोहो वराकाणां भारतीयानां यत् ते स्वमहिमानमननुध्याय पाश्चात्त्यानानुधावन्ति। नास्तीतरत्र निदर्शनं भारतीयानामृषीणां मुनीनां च चिन्तननीकाशतायाः।

## ( ख ) परिचितचराणां विचाराणां पुनर्विन्यासः

पुरातनानां परिचितचराणां च विचाराणां तथ्यानां वा विभिन्नक्रमैः पुनरुपस्थापनपूर्वकं नवीनसमूहरचना नूतनविचाराणामाविष्काराणां च प्रादुर्भावे सहायिका भवति। पूर्वमुदाहरण-द्वयमपि निर्झरलेखन्या मणिबन्धघटीयन्त्रस्य चाविष्काररूपं प्रस्तुतं मया प्रक्रियाया अस्याः। स्वज्ञाततथ्यानां साधारणतो दृश्यमाने क्रमे विधेयं परिवर्तनम्। तथ्यानि च तानि नूतनक्रमैर्विन्यस्य पर्यायतः परीक्षणीयानि। एवं खलु समेधते नूतनविचारोद्भावनसम्भावना।

नूतना विचाराः प्रायः परिचितविचाराणां समुदाये तथा तिष्ठन्ति, यथा चित्रप्रहेलिकाया-मभीष्टं चित्रं वृहति चित्रव्यूहे निलीनं तिष्ठति। चित्रप्रहेलिकायामभीष्टचित्रस्य पुरातनविचारेषु च नव्यविचाराणां विचेयताविधिरभिन्नः। तद्यथा—सम्मुखागतस्य चित्रसमुदायः, तथ्यचयो वा विभाजनीयो लघुलघुषु खण्डेषु। तदनु तेष्वन्यतमो द्रष्टव्यो नूतनकोणेन। यदोपलब्धा सूचना मिथो विरोधिनी; असमाधेयजटिलतथ्यपूर्णा भवेत्, तदा तद्गर्भतः सत्यांशविचयनाय तस्या विभिन्नानामङ्गानां कालक्रमेण विन्यासो भवितोपयोगी।

तथ्यानां मिथः सम्मुखीकरणेन बहवो नवीना विचाराः समुद्भवन्ति। विषयाणामुप-विषयाणां शीर्षकाणामुपशीर्षकाणां वैका सूची निर्मेया। सूच्याः सर्वे पदार्थाः क्रमशः पर्यवेक्षणीयाः, विचारणीयाश्च तेषां नवनवाः सम्बन्धाः पौर्वापर्यसम्बन्धा वा। मिथः कीदृशः सम्बन्धोऽस्ति, ते मिथः कथं प्रभावयन्ति, तेषां च पारस्परिकेषु सम्बन्धेषु को वा परिष्कारः पार्यते कर्तुम्। अनेन विधिना डा० एल्मरगेट्सनामको मनोवैज्ञानिको बहूनाविष्कारान् व्यचैषीत्। एतादृश-तुलनाविधिर्धैर्यमध्यवसायं चापेक्षते। प्रक्रियाया अस्याः प्रथितान्युदाहरणानि बीजगणितक्षेत्रे समधिगम्यन्ते।

## ( १० ) कार्यानन्तरं विरामः

स्वोपज्ञतायाश्चतुर्थे पणे कार्यानन्तरं विरामः। सरवाल्टरस्कौटमहोदयो यदा घस्रे कामपि समस्यां समाधातुं न पारयते स्म, तदा स श्वस्तने गोसर्गे विश्वसिति स्म। अचेतनमानसक्रियाः कार्यपूर्त्यर्थं समयमपेक्षन्ते। परिश्रमस्य विश्रामस्य चाभ्यावृत्तिः स्वोपज्ञताकुञ्जिका।

## ( ११ ) संवेगशक्तिः

'तीव्रसंवेगानामासन्नः' योगशास्त्रम् ( १, २१ ) ।

स्वविषयम् आहोस्वित् कार्यक्षेत्रं प्रति श्रद्धोत्साहध्यानानि केन्द्रीकरणीयानीत्ययं पञ्चम उपायः कल्पनाशक्तेरेधनाय । तदुक्तम्—

श्रद्धायत्नौ यदि स्यातां मेधया किं प्रयोजनम् ।
ताबुभौ यदि न स्यातां मेधया किं प्रयोजनम् ॥ इति ।

श्रद्धोत्साहौ स्वाभीष्टं लक्ष्यं प्रत्यनवरतपरिश्रमाय प्रेरयतः । एतयोरेव शक्तिर्मानसशक्ते- र्विकीर्णान्यङ्गान्येकमुखीकरोति । बुद्धिप्रेरकतत्त्वेषु संवेगो भावना वा प्रधानतमा । भावनैव योग्य- तायाः प्रतिभाया वा तात्त्विकं रहस्यम् ।

## ( १२ ) सिद्धान्तं स्थिरीकृत्य परीक्षणम्

समस्यायाः परीक्षणार्थमनेके वैकल्पिकाः ( काल्पनिकाः ) सिद्धान्ताः स्थिरीकर- णीयाः, तदनु चैकैकशस्ते परीक्षणीयाः । अयं षष्ठ उपायो लब्धफलस्य ( Solution ) अन्वेषणे परमः सहायकः ।

## ( १३ ) उपमा ( Anology )

नूतनविचाराणाम्, विशेषतः प्रकृतेः सुगुप्तानां नियमानामाविर्भावार्थम् उपमारूपः सप्तम उपायः । अनुसन्धानकर्मणि समुच्छ्रितं स्थानमुपमायास्तुलनाया वा । उपमाविशेषज्ञता महिष्ठं कार्यमित्यरस्तूमहोदयस्योक्तिर्यथार्था । अद्भुतप्रतिभाया ( Genius ) लक्षणमुपमा- विशेषज्ञता । असदृशवस्तुषु सादृश्यगवेषणयोग्यतैवास्यार्थः । अस्पष्टोपमस्य विचारकस्य विचारोऽप्यस्पष्टो भवति ।

## ( १४ ) प्रतीक्ष्यन्तां नूतना विचाराः

मानस्याः शक्तेः प्रयोगं कुर्वाणेन तत्र विश्वसनीयमित्यष्टम उपायः । अनवरतपरि- श्रमान्ते नूतना विचारा अवश्यमाविर्भविष्यन्तीति विश्वासो मानसीं क्रियामत्यर्थं प्रभावयत्युत्तेज- यति च ।

## ( १५ ) कल्पनायाः प्रयोगः

असंख्यातानां कर्मणां सम्बन्धे संदिहीत विचारकः—'किमिदं कार्यं न शक्यते प्रकारान्तरेण समनुष्ठातुम् ?' वस्तुगत्या तदेव मानसं जीवितं यद् आत्मानमेवमनवरतमनुयुङ्क्ते ।

प्रायः सर्वेषां मानसानि तु नैवमनुयुञ्जते, आलस्यात्, एवंविधानुयोग आविष्कारकुञ्चिकेत्यनवगमाच्च। उपयोगिनां पदार्थानां सम्बन्धेऽनुयोगस्त्वभाव आस्थेय इत्थम्—

१. किमियमनिवार्यता यदयं पदार्थोऽस्मिन्नेव स्वरूपे तिष्ठेत ?

२. किमस्य पदार्थस्य निर्माणमन्येन रूपेण भवितुं नार्हति ?

३. किमिदं कार्यं प्रकारान्तरेण कर्तुं न शक्यते ?

४. किमिह कोऽपि परिष्कारः शक्यते विधातुम् ?




एवंविधप्रश्नानामुपस्थापनाभ्यासेन ह्यात्मनः समाजस्य च लाभः सुनिश्चितः। यः खलु निरन्तरं लघुलघूनि काल्पनिकपरीक्षणानि विदधाति, स स्वात्मनि तादृशीं योग्यतामाविर्भावयति यया चमत्कारावहानि महिष्ठानि कार्याणि पारयते कर्तुम्।

—×—

## अनुसन्धानानन्दः

अयि प्रेयांसो बान्धवाः! संपोषयन्तु स्वजन्मजाताम् अन्तःप्रेरणाम् उत्साहं च सावधानम्। एवं सत्यपि, विदधतु सहचरीमभिन्नां निष्ठुरपरीक्षां तयोः।······अन्विष्टं वैज्ञानिकं तथ्यं मयेति विश्वासे सति, तस्य तथ्यस्य जगतः समक्षं प्रकटनाय यद्यपि भवति बलवान् मनोरथः, तथापि दिनानि मासान् कदाचिच्च वर्षान् अपि नियमनीय आत्मा तथाऽकरणाय; समधिकृत्य तत् तथ्यं वितर्कणीयम् आत्मनैव सत्रा; स्वकीयप्रयोगाणाम् असङ्गत्यर्थं चेष्टनीयम्; सर्वासां प्रकल्पनानाम् उपपत्तीनां च निरासं कृत्वैव स्वानुसंधानप्रकाशो जगतः समक्षं विधेय इतीयं प्रबला कठोरपरीक्षा। यदा खलु विज्ञानवेत्ता स्वानुसन्धानस्य साधीयस्त्वं निश्चिनोति, तदा मानवहृदयवेद्यम् अनुभवत्यसौ समानन्दम्। अनुसन्धानेनानेन देशो व्यधायि तेन गौरवमण्डित इत्ययं विचारस्तदीयम् आनन्दं समृध्नोति ततोऽपि गाढतरम्।

—लुई पाश्चरः

७

# निरन्तरणीयम् अनुसंधानम्

एकदा नक्तं कश्चन भूपो हयमारुह्य निर्गतो भ्रमणार्थम्। अधिमार्गम् असौ न्यध्यासीद् अवाञ्चं हैमकणानां कृते तितउना पवमानं मृदम् एकं जनम्। प्रपावं प्रपावं वप्र आचितस्तेन मृन्मयः। क्षणं निर्वर्ण्य राजा तम्, वप्रे निक्षिप्य निजहेमाङ्गदं जवेनाञ्जसा प्राचलत्। उत्तरेद्युर्महीक्षित् पुनस्तेनैव वर्त्मना प्रयातः क्षपायां विलोकितवान् इदानीमपि मृत्पवनव्यापृतं पूर्ववत् तं जनम्। अथ राजा व्याहार्षीत्–"पुरुषप्रकाण्ड ! ह्यः समासादितं केयूरम् अलं विश्वपरिक्रियणाय। कुतो न विरमसि मृत्पवनात् पुनः ?" अथ प्रत्यवादीद् विचायकः—"ह्यस्तनी श्रेष्ठवस्तुनः प्राप्तिरेव मां प्रेरयति विचयननैरन्तर्यार्थम्।" एवमेव भवन्तोऽपि निरन्तरयन्तु गवेषणाम् आनिधिद्वारदर्शनम्।



# विशिष्टज्ञानार्थम् आङ्गलभाषामया

## इमे ग्रन्था द्रष्टव्याः

1. A Manual for Writers of Term Papers Thesis and Dissertations—Tunabian Katel.
2. A Manual of Thesis Writing.
3. Auto-Suggestion—Emile Coue.
4. Brain-Building for Achievement—Casson.
5. Consentration—Ernest Wood.
6. Creating New Ideas—Knowlson & Ennver.
7. Form and Style in Thesis Writing—Campbell William Gibs.
8. How to Use Your Mind—Kitson.
9. How to Write a Thesis.
10. Memory and Its Cultivation—Edridge Green.
11. Mind and Its Education—Brett.
12. Originality—Knowlson.
13. Perfect Memory—Basil Hogarth.
14. Self-Mastery Through Suggestions.
15. Stream-Line Your Mind—Mursell.
16. The Scientific Outlook—Bertrand Russel.



—:o:—

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पङ्क्तिः |
|---|---|---|---|
| संदर्भग्रन्थोल्लेख | संदर्भग्रन्थोल्लेखः कार्य- | १३ | १६ |
| -संख्यांदिकं निर्देश्यम् | संख्यादिकं च निर्देश्यम् | १३ | १७ |
| व्याकरणछन्दो... | व्याकरणच्छन्दो | १४ | ३ |
| वैज्ञानि | वैज्ञानिक .. | १४ | २४ |
| तावत् | तावत् | १५ | २३ |
| प्रतिप्रेषितानां | प्रति प्रेषितानां | १७ | २ |
| एकत्रीभावः | एकस्थीभावः | २१ | ८ |
| तदेकत्रीकरणं | तदेकस्थीकरणं | २१ | १८ |
| यदा चिन्तनक्रियानन्तर-मवकाशकाले भवन्तो | भवन्तो यदा चिन्तनक्रियानन्तर-मवकाशकाले | ४० | १५ |

—:o:—

